पोतापनीताध्वश्रमः[1] समुदित्वरमहत्तरमहोज्ज्वलकायकान्तिकन्दली[2]-कळिन्दापत्याम्भःसंभिन्नमहासुरःस्रवन्तीजलप्रवाहावगहनापास्त[3]-समस्तलोकांहस्ततिः[4] कौस्तुभलक्ष्मा हस्तिनपुरोपकण्ठमहास्त, गभस्तिराडप्यस्तगिरिशिरस्तटीम् । एवमाऽनुवत निःशेषविश्वंभरां विहाय शनैःशनैः काश्मीररोचिषो रश्मयो हारिदश्वाः शिलोच्चयशिखराणि ।

एवं समायाते सायाह्ने स कंसघाती घूर्णमानघुमुघुमितनि[5]-ध्वानबधिरीकृतप्रपञ्चं पाञ्चजन्यमापूरयामास ।

अनन्तरमम्बुजाक्षकम्बुराजजन्मना अनन्तान्तराळनिरन्तरीभूतेन तेनैव[6] ध्वनितेन बोधितमाधवागमनमुदिता नितरामुदघूर्णत कुरुराजधानी ।

ततश्चापास्य कुरुकुलोत्पातकेतुं नागकेतुं पुरस्कृत्य कृत्स्नागम[7]-निष्णातमतिं विष्णुपदीसूनुं, कौरवपरित्राणोन्निद्राणं द्रोणं, दामोदरदर्शनसादरं विदुरं, दुर्वारबाहुस्थमानमश्वत्थामानं, धन्यानन्ये सत्वराः कौरवाः सर्वतः सन्ताडितभेरीरवापूरितरोदोविवरा[8] महत्या वाहिन्या सार्धं प्रीत्युत्फुल्लदृशः प्रत्युज्जग्मुर्जगन्नाथं भक्तिप्रपन्नाः प्रणामादिभिश्चोपाचरन् ।

दाशार्होऽपि तान् यथार्हमर्हयामास । तदनु तस्मात् प्रदेशान्मन्दहाससुन्दरनिजवदनारविन्दसन्दर्शनकन्दलितानन्दातिरेकमन्दी[9][10]-

---

१. ‘ मः महत्तरोज्ज्व ’ ख. ग.
२. ‘ न्दळकळि ’ क.
३. ‘ प्रपातनापस्त ’ ख. घ.
४. ‘ स्तजनतांह ’ क.
५. ‘ घुमुध्वान ’ घ.
६. ‘ तेन ध्वनि ’ क.
७. ‘ स्कृणागमनिनि ’ ख. घ.
८. ‘ भेरीविरावपूरित्र ’ क.
९. ‘ रतरवदना ’ ग.
१०. ‘ कन्दळदानन्द ’ क. ङ.

भूतगतिभिरमीभिः[1] परीतः[2] कौरवपुरीं[3] पुरुषोत्तमः प्राविशत् । प्रविश्य च क्षत्तृदत्तहस्तो रथादवतीर्य रथ्यावीथीमध्यतिष्ठत् ।

दिदृक्षवे पौरवधूजनाय
मुरारिमाख्यातुमिवापतन्तम् ।
पुरे पटीयान् प्रतिसौधगर्भं
बभ्राम मङ्गल्य[4]मृदङ्गघोषः ॥ ६५ ॥

त्यक्त्वा तदा मण्डनमर्धक्लृप्तं
क्रीडासु चान्यासु कृतानपेक्षाः ।
अभ्रेषु विद्युल्लतिका इवाशु
नार्यः पदं हर्म्यतलेषु चक्रुः ॥ ६६ ॥

नलिननयनोऽपि तासां कलिन्दनन्दिनीकल्लोलतुल्यकुल्याभिर्विलोचनकुवलयमालाभिः संच्छन्नमूर्तिः समतीत्य कक्ष्यासप्तकं सम्भृतमङ्गलोपहार[5]निकुरुम्बमम्बिकासूनोः सद्म पद्मापतिः प्रपेदे ।

दृष्ट्वा भीष्माम्बिकेयप्रमुखकुलगुरून् धार्तराष्ट्रस्य गेहं
यातो देवोऽथ तेन च्छलनिपुणधिया भोक्तुमामन्त्र्यमाणः ।
अन्नं संप्रीतिभोज्यं न च खलु मयि संप्रीयसे कौरवेति
क्षत्तुर्गेहं जगाहे हरिरतिकुतुकी भक्तभक्ते रसार्द्रे ॥ ६७ ॥

प्रविश्य विश्वार्तिहरः स देवो
दृष्ट्वा पृथां पुत्रवियोगखिन्नाम् ।

---

१. भिः कौरव ' ग.
२. ' पुरं पुरु ' क.
३. ' क्षत्रा दत्त ' क.
४. ' माङ्गल्य ' क.
५. ' रनिकरमाम्बिका ' क. ग.

आश्वासयद् द्रक्ष्यसि निर्जितारी-
नल्पैरहोभिस्तनयांस्तवेति ॥ ६८ ॥

कृताह्निकस्तत्र कृतार्थभाव-
मासेदुषस्तल्पसमीपभाजः ।
रणैषिणां पाण्डुभुवामुदन्तं
क्षत्तुर्वदनेन निशामनैषीत् ॥ ६९ ॥

क्लृप्तप्रत्यूषकृत्यस्तदनु कुरुपतिः सेवितः सौबलाद्यै-
रास्थानीमात्तभूषो नृपवृषभवृतां प्राप्य देदीप्यमानः ।
नत्वा गाङ्गेयमुख्यान् निजपितृवचसा तुङ्गमङ्गाधिराज-
स्कन्धासङ्गी स भद्रासनमलमकरोदाददे चाथ वाचम् ॥ ७० ॥

दुर्योधनः—

हे भूपाः! शृणुतादरादुपगतो दूतः पृथाजन्मनां
मायामोहितमूढलोककलितप्रौढिः स गोपालकः ।
प्रत्युत्थास्यति योऽस्य दास्यति स मे दण्ड्यः सुवर्णं मितं
भारद्वादशकेन शासननिराकर्ता जगत्यामिति ॥ ७१ ॥

बालातपप्रेक्ष्यतराम्बरोऽय-
मानन्दिताशेषविलोचनाब्जः ।
प्राचीमिव प्रातरिनो मुरारि-
र्वैचित्रवीर्यस्य सभां विवेश ॥ ७२ ॥

आलोक्यैनं प्रतिहतदृशस्तेजसा भूमिपाला-
श्चेलुः स्थानादगणितनृपोदीर्णदण्डाः समन्तात् ।

सावष्टम्भः स च कुरुपतिर्मूढधीः पीठदेशाद्
विभ्रष्टोऽभून्मिषति परितः क्ष्मापलक्षे विलक्षः ॥ ७३ ॥

स सर्वतोभद्रमिति प्रसिद्ध-
मातास्थिवानासनमम्बुजाक्षः ।
निष्पन्दसभ्येक्षणलक्ष्यमूर्तिः
प्रज्ञादर्शं भूमिपतिं बभाषे ॥ ७४ ॥

**कृष्णः**—

राजन् कौरववंशकैरवसुधासूते! पृथासूनुभि-
र्दूतोऽहं प्रहितो हिताय सुहृदां सन्धित्सुभिः साम्प्रतम् ।
मा भूत् त्वन्मतिरन्यथा तदपथोद्युक्तान् निरुद्ध्याधुना
पुत्रांस्ते स्वपुरे पुरेव कुरु तान् पाण्डोः सुतानादृतान्* ॥ ७५ ॥

विज्ञापयन्ति च भवन्तमनन्तखेद-
प्रोद्भ्रान्तबाष्पभृशगद्गदरुद्धकण्ठाः ।
दूरावनम्रशिरसश्चिरसोढपीडा-
भारासहा इव नराधिप! मन्मुखेन ॥ ७६ ॥

बाल्ये येन विवर्धिताः कृतधिया पुष्टा स्वपोषं वयं
वात्सल्यादथ तासु तासु विनयं विद्यासु च ग्राहिताः ।
वाचा तस्य तवानुभूतविपिनक्लेशाश्चिरादागता
भूयस्त्वत्कृपया लभेमहि महीमात्मांशभूतामिति । ७७ ॥

* एतदनन्तरं 'वीरैरूरीकृतै॰ (७८) इति पद्यं दृश्यते क. ग. ङ. पाठेषु.

१. 'प्रशस्तमा' ग. ङ.  २. 'कुरुतात् पाण्डोः' क. घ.
३. 'दपि तासु' ख. ४.  ४. 'रमानुभू' घ.

तत् संप्रति स्वीकुरु तान् प्रवीरां-
स्तवोज्ज्वलस्य स्थितये कुलस्य ।
[1]त्वदर्थमेते च नृपाः समेता
निवृत्तकृच्छ्राः प्रतियान्तु देशान् ॥ ७८ ॥

वीरैरूरीकृतैस्तैरुरुभुजविभवैर्मात्स्यपाञ्चालमित्रैः
पुत्रैरेभिश्च भीष्माद्यतिरथमथितारातिभिर्वीतवैरैः ।
नित्यं त्वत्तोऽभिगुप्तात् त्रसति सुरपतिः सोऽपि भेदे तु राजन्!
[2]नेष्टेष्विष्टेषु शिष्टेष्वपि च कतिषुचित् को नु लाभो भवेत् ते ॥

धृतराष्ट्रः—

नृप[3]स्तमाभाषत किं नु कुर्या-
मयं सुतो मे न वचः शृणोति ।
सान्त्वेन दाशार्ह! निवर्तयैनं
कदध्वनः सौहृदनिघ्नचेताः ॥ ८० ॥

उक्तः[4] स तेनैवमथासुरारि-
[5]र्विवृत्तवक्षोवलमानहारः ।
एकासनाध्यासिनि भानुसूना-
वुपाश्रितं कौरवमाबभाषे ॥ ८१ ॥

कृष्णः—

जातस्त्वं विमले कुले शशभृतस्त्वामाश्रिता श्री[6]स्त्वया
कर्णाद्यैः करदीकृताः क्षितिभृतः कुप्यन्ति तुभ्यं तु ये ।

---

१. ‘ गता नरेन्द्रा निवृ ’ ङ.
२. ‘ नष्टेष्वेतेषु शिष्टे ’ ङ.
३. ‘ स्तदाभाष ’ क. ग.
४. ‘ उक्तश्च तेनै ’ क. ग. ङ.
५. ‘ विवृत्य वक्षो ’ क. ङ.
६. ‘ श्रीः स्वयं ’ ङ.

त्वत्तो लब्धसमीहिता हि सुहृदः पृथ्वी तवास्ते वशे
त्वय्येवं गुणभाजनेऽप्यपनयो लब्धास्पदोऽयं कथम्* ॥ ८२ ॥

दुर्द्यूतदेवनगुरुस्तव मातुलोऽयं
कर्णस्तु दुर्नयमहार्णवकर्णधारः ।
तस्मादयुक्तमनयोरनुवर्तनं ते
पथ्यं न यो वदति भर्तुरसौ हि शत्रुः ॥ ८३ ॥

सार्धं दुरन्तैः सचिवोपदेशैर्लोभं विसृज्योभयलोकशत्रुम् ।
सङ्गम्य पार्थैः सह सौहृदेन हतद्विषं भुङ्क्ष्व महीमशेषाम्[2] ॥ ८४ ॥

ग्रामाणामपि पञ्चकं दिशसि चेदेतावतैवात्मनो
वृत्तिं क्वापि विधित्सवः शमपरा वाञ्छन्ति सन्धाममी ।
दत्त्वा पित्र्यमुपार्जितं[3] तदधुना राज्यार्धमेभ्यो भवा-
नास्तामत्र सुखी[4] भवेदिह न चेत्किं कौरवं क्ष्मातलम् ॥ ८५ ॥

तावत् सुतं व्याहरदाम्बिकेयः
प्रसीद बद्धोऽयमिहाञ्जलिस्ते ।
मन्युज्वरस्यौषधमार्तबन्धोः
शौरेर्वचः पथ्यमिदं पिबेति ॥ ८६ ॥

---

* इतः परं, तत्तादृशं शृणु महत्तव वंशवृत्तं पूरुर्ददौ नववयः पितुरात्तजैण्यः ।
त्यक्त्वाश्रमं पितृमुदे तृणवद् द्वितीयं देवव्रतोऽयमिह तिष्ठति धीरधीरः ॥
इत्येकं पद्यमधिकतया दृश्यते ङपाठे

---

१. ' ताश्च सुहृदः ' ख.
२. ' षाम् ॥ तावत् सुतं ' ग. ङ.
३. ' पार्जनं तद ' क.
४. ' सुखी न चेदिह भवेन्नि ' क. ङ.

तमूचतुः शान्तनवो गुरुश्च क्षेमाय सन्धत्स्व युधिष्ठिरेण ।
चापेषु मात्स्यप्रमुखा[1] रणाग्रे न सायकान् सन्दधतां [2]नरेन्द्राः ॥८७॥

चिराय योगं कुरुपाण्डवानां
　निरीक्ष्य राजन्यगणः समेतः ।
प्रमोदजं मुञ्चतु वारि नेत्रै-
　र्न शोणितं पार्थशरक्षताङ्गैः ॥ ८८ ॥

वचांसि लोकः प्रणयोचितानि
　शृणोतु तेषां भवतां च हृष्टः ।
निर्घातकल्पान्[3] कुपितस्य सङ्ख्ये
　समीरपुत्रस्य न सिंहनादान् ॥ ८९ ॥

राधासुते हसति कल्पितहस्तताळे
　दुःशासने[4] च दृशि सूचितसन्धिदोषे[5] ।
[6]आलोक्य मातुलमुखं प्रहसन् कुरूणा-
　मीशोऽपि केशवमुवाच वचो नृशंसम्[7] ॥ ९० ॥

दुर्योधनः—

आबाल्याद् ये विरोधं व्यदधत विविधं साधुवृत्तेष्वकस्मा-[8]
　दप्यस्मादाचवैराः सदसि विनिकृता देधने ते सुदीनाः[9] ।
नीता मे नीतियोगादहह! वनभुवं भीममुख्यास्त्वदीयाः
　प्रायो वृत्तं तदेतत् त्रिभुवनविदितं दूत! जानासि नो वा ॥९१॥

---

१. 'खा नरेन्द्रा न' घ.　२. 'रणाग्रे' घ.
३. 'घोरान्' क. ङ.　४. 'सनेन दृशि' क. ग.
५. 'षः' क. ग.　६. 'संप्रेक्ष्य' क. ग. ङ.
७. 'सः' ङ.　८. 'स्मास्वात्त' क. ङ.　९. 'प्रदी' क.

वृद्धौ लब्ध्वा विराटद्रुपदकुनृपती साम्प्रतं साह्यकृत्ये[1]
मह्यं द्रुह्यन्ति यत्ते किमिह बहुविधं ब्रूमहे हास्यमेतत्[2] ।
गच्छ त्वं ब्रूहि पार्थान् मयि धरणिरियं सुस्थिता तत्[3] प्रदास्ये
युष्मभ्यं पुण्यलभ्यं रणभुवि निशितैः सायकैर्नाकलोकम् ॥९२॥

श्रीकृष्णः—

श्रीमन्नेष भवन्मनोरथतरुः कर्णादिदुर्मन्त्रितै-
रुन्मीलत्कुसुमश्रितः शकुनिना कालेऽफलिष्यत् स्वयम् ।
तद् गङ्गाधरमूर्ध्नि मग्नमुदमज्जिष्यन्न चेदर्जुन-
स्योच्चण्डाहितषण्डखण्डनकलापाण्डित्यभृद् गाण्डिवम् ॥ ९३ ॥

दुर्योधनः—

द्वौ बाहू चरणौ च यस्य[4] नरवत् तुल्यं मुखाक्ष्यादिकं
नद्धं सप्तभिरेव धातुभिरहो गात्रं सगोत्रं जनैः[5] ।
यद्यप्येवमथापि केन[6] सदसि ग्रस्तौषि पार्थं मुधा
राधेयस्य पुरः करिष्यति स किं क्रोधाज्ज्वल[7]न्नर्जुनः ॥ ९४ ॥

कृष्णः—

पाञ्चालीवरणोत्सवे रणविधूताखण्डले खाण्डवे
चण्डीशे कुहनाकिरातवपुषि त्वद्घोषयात्रान्तरे ।
उग्रे गोग्रहसङ्गरे[8] च विदितस्थेमा स भीमानुजो
नूनं न श्रुतिगोचरोऽद्य भवतो येनेदृशं भाषसे ॥ ९५ ॥

---

१. 'साधुकृत्ये' घ. २. 'बहुतरं ब्रू' क. ङ. ३. 'रा तत्' ङ.
४. 'धीम' क. ५. 'तस्य' क. ग. ङ. ६. 'दूत' ख.
७. 'कोपाज्ज्व' क, 'क्रोधोज्ज्व' ङ. ८. 'रे प्रकटितस्थेमा' क.

युक्तं [1]यत्तु युधिष्ठिरे विनिकृते कृष्णावमाने च यद्
यच्चार[2]ण्यनिवासने यदपि खल्वज्ञातवासश्रमे ।
यच्चास्त्रेषु समार्जितेष्वविकलं यच्च प्रसन्ने हरे
क्रुद्धे यच्च [3]धनञ्जये [4]यदधुना कर्मैष निर्मास्यति[5] ॥ ९६ ॥

दुर्योधनः—

वाचोयुक्त्यैव राज्यं नहि तव सुहृदां पैतृकं [6]स्याद्यदेते
कुण्डाः पाण्डौ विमोहाद्विहितमुनिवधे षण्डभावं प्रपन्ने ।
जाता धर्मानिलाखण्डलसुरभिषजामात्मजास्तुल्यदार-
स्वीकारोद्यत्कलङ्का विपिनभुवममी यान्तु शान्तावलेपाः ॥९७॥

कृष्णः—

स्वर्याते[7]ऽथ विचित्रवीर्यनृपतौ व्यासोऽम्बिकायाममुं
नूनं ते जनयाम्बभूव जनकं जातोऽसि तद् गोळकात् ।
राज्यार्हः स कथं तथापि बहु[8]र्धा किं कत्थसे त्वं मुधा
वक्तुं तत्र समर्थमुत्तरमलं भैमी गदा केवलम् ॥ ९८ ॥

दुर्योधनः—

वक्तव्यं भृत्यवर्गैर्ननु नियतमिदं भर्तृवाक्यं यथोक्तं
दृप्तोऽसौ बह्वबद्धं भयमुपजनयन् भाषते यत् स्वयं माम् ।
प्रत्यक्षं क्ष्मापतीनां [9]यदयमुपगतो वध्यतां बध्यतां वा
शक्ताश्चेदेत्य पार्था निजकुनयपथादेशिकं मोचयन्तु ॥ ९९ ॥

---

१. ‘ यच्च युधि ’ ग. २. ‘ण्यविवा’ क. ख.
३. ‘ वृकोदरे तत्रखिलं कर्मैव ’ ग. ४. ‘ तदधुना ’ क. ङ.
५. ‘ ति ॥ ग्रामाणामपि० (श्लो०सं० ८५) वाचो०, (श्लो० सं० ९७) ग. ङ.
६. ‘ स्यादथैते ’ ग. ७. ‘ ते हि ’ क. ग.
८. ‘ धा यत् कत्थसे ’ क. ९. ‘ तदयमुप ’ क. ख.

इत्युक्त्वैव [1]सभान्तराद्विचालिते दुःशासनाद्यैः समं
बन्धुं बन्धहरं हरिं त्रिजगतां दुर्योधने व्यापृते ।
बुद्ध्वा वृत्तमिदं सभां सरभसं प्राप्तोऽवदत् सात्यकि-
र्हा ही साधु चिकीर्षिताद्य कुरुभिर्वर्या सपर्या [2]हरेः ॥ १०० ॥

सात्यकिः—

निरुद्यमाः पाण्डुसुता मुरारौ
बद्धे भवन्तीति[3] विचार्य मूढः ।
त्रिभिः [4]सहान्यैर्धृतराष्ट्रसूनु-
र्बन्धुं सतामिच्छति बन्धुमेनम् ॥ १०१ ॥

तेनोत्तुङ्गशिखाकलापकपिलश्वेलाञ्चलेनानलो
बद्ध्येताथ सदागतेरगतिता दीयेत पाशैर्दृढैः ।
किञ्चासङ्ख्यतिमिङ्गिलो जलनिधिर्लङ्घ्येत दोष्णा सुखं
[5]कृष्णोऽथं गततृष्णयोगिनिवहध्येयो [6]निबद्ध्येत चेत् ॥१०२॥

अत्राहमेकः कुरुराजपुत्रा-
नद्यैव बाहुद्रविणावलिप्तान् ।
अन्यांश्च हन्यां युधि वीरवर्यान्
वृथा भवेत् पाण्डुसुतप्रतिज्ञा ॥ १०३ ॥

नृपो वचस्तस्य निशम्य भीतः
क्षत्रा समानाय्य जगाद पुत्रम् ।

---

१. 'सभातलाद्वि' क. ङ.
२. 'हरेः ॥ तदनु महीपतिवीरपार्ष्णि' ग.
३. 'ति नितान्तमूढः' क. ङ.    ४. 'सहायैर्धृ' क. ख.
५. 'कृष्णो यद् गत' ख. ग. घ.
६. 'निरुद्ध्येत चेत् ॥ ततस्ते सन्निहित' क. ङ.

त्वया न बद्ध्येत बलेर्निहन्ता
  त्वमेव बद्धोऽसि कृतान्तपाशैः ॥ १०४ ॥

गतेऽथ तस्मिन्नवमत्य तातं
  त्रस्तान् समस्तानवदन्मुरारिः ।
अयं कुरूणामधिभूर्यदि स्याद्
  भवेदशेषेयमकौरवा भूः ॥ १०५ ॥

अन्यैस्त्रिभिः सार्धमिमं निगृह्य
  निधीयतां राज्यमजातशत्रौ ।
पुरावमन्ता पितरं स्वमेव
  न मातुलः किं न हतो मयासीत् ॥ १०६ ॥

द्राङ् निग्रहादस्य दुरीहितस्य
  वंशः सुधांशोर्भवितानपायः ।
निर्वासनात् कालियपन्नगस्य
  कलिन्दजाया इव पूर्वमोघः ॥ १०७ ॥

बहिः स संमन्त्र्य बलावलिप्तै-
  स्त्रिभिः सहायैर्धृतराष्ट्रसूनुः ।
गन्धर्वराजेन कृतां दशां स्वां
  गदाग्रजन्मानमियेष नेतुम् ॥ १०८ ॥

[1]तदनु सन्नाहितमहीपतिवीरपार्ष्णिग्राहाः कर्ण[2]दुःशासनशकुनिहतकाः पुरा किल बाल्यचापल्ये गोपाल्या निबद्धोऽसौ भीमयमै[3]ळार्जुन-

---

१. 'ततस्ते सन्ना' क. 'तदनु ते सन्ना' ङ 'तदनु महीपति' ख. ग.
२. 'र्णदुर्योधनदुःशा' क. ग. ङ. ३. 'मार्जुन' ख. ग.

भङ्गहेतुः सञ्जात इति पुनरपि तथाकर्तुकामा इव नतबन्धहारिणं बालिबन्धकारिण[1]ममुं भुवनैकबन्धुं[2] निजामपनयैरे[3]व केवलमबन्धूकृतं बन्धुमिच्छन्तो भृशं खला विशृङ्खला अपि करतलसङ्गीकृतरज्जुशृङ्खलाः सज्जनसदसि लज्जाभयवर्जिता दुष्कृतरसाद् धिक्कृतधृतराष्ट्रविदुर[4]बहुतरनिवारणवाक्या हीहीरवहाहारवमुखरमुखेषु सकलसामाजिके[5]षु अधोस्थितेष्वा[6]सीनेषु च निर्गन्तुकामेषु निरोद्धुकामेषु *पार्श्ववर्तिनि दीप्तकोपे सात्यकौ सात्वतर्षभभ्रूविभ्रमनिवारिते[7] सभां विविक्षति धृतायुधवर्मणि कृतवर्मणि शपामि शस्त्रं गृह्णामि वेति सकृपेऽपि विकृपे संभ्रान्ते द्रोणाचार्ये स्पृष्टमात्रे विष्टरश्रवसि दुष्टानमून् पिष्टपेषं पिनष्मीति भीष्मे कृतनिश्चये सभाजनार्हाननवेक्ष्य सभाजनमध्ये समापतितुं प्राक्रमन्त[8] ।

. .

ततश्च[9] चिदानन्दमयः स पुराणपुरुषः परिषन्निषण्णसकलजननयननवामृतायमानं[10]कळायमानहरकळेवरलक्ष्मीः[11] सुमेरु[12]शृङ्गतुङ्गमहासनमध्यमध्यासीनो मृगाधिपः सृगालानिव दुराशयानमून् निरादरदृष्ट्या निरीक्षमाणः तमोमयानामेषां निवारणायेव निजवदनेन्दुकन्दळितसुन्दरतरदन्त[13]कान्तिसन्ततिमयचन्द्रिकाप्रकाशं पुरतः प्रसारयन्

---

* 'पार्श्व' इत्यारभ्य 'नासत्य' (P. 28 L. 20) इत्यन्तं पत्रमेकं भ्रष्टं कपाठे ।

---

१. 'णं भुव' ख. घ. २. 'न्धुमप' ख घ.
३. 'वाबन्धू' ग. ङ. ४. 'रमुखबहु' ग.
५. 'कजनेषु अधो' ग. ६. 'ष्वासितेषु निर्ग' क. ग.
७. 'ते निजाक्षौहिणीयुते सभां' ग. ङ.
८. 'प्रारभन्त' ग. ङ. ९. 'तदानी' च' ग. ङ.
१०. 'नवितायमानकलायमनोहरं' ङ.
११. 'क्ष्मीः सभान्तराळे सु मे' ग. ङ.
१२. 'तुङ्गशृङ्गमहासनाध्या' ङ.
१३. 'न्तपङ्क्तिकान्ति' ङ., 'न्तकान्तिमयचन्द्रिका' म.

"अयि भोः सुयोधन! किमहं निःसहाय इति त्वं बन्धुमिच्छसी"ति वदन् किमप्युच्चैर्जहास ।

तावद् देवस्य देहाज्झटिति पटुतटित्कोटिवत् ताडिताक्षः
संहारोन्निद्ररुद्रस्फुटनिटिलशिखिज्वालजालप्रकाशः ।
कल्पान्तक्रूरसूरोत्करकिरणसमाहारघोरः समन्ता-
दारुन्धानः सभां तां निरपतदतुलः कोऽपि तेजःसमूहः ॥१०९॥

तस्य च सर्वतोविसृमरदावपावकज्वालामालोद्गारिमारतकशैल-शैलीमुद्वहतः सकलप्रपञ्चकुक्षिंभरेर्विश्वंभरस्य तत्तदवयवेभ्यः पङ्कजभव-शङ्करसंक्रन्दनादिसुरवृन्ददनुजमनुजभुजङ्गमप्रमुखा निश्शेषविश्ववासि-नोऽप्यहमहमिकया समुत्पेतुः ।

तत्र चास्य निटिलदेशाच्चतुःसनकसप्तर्षिनवयोगिशतवैखानस-षष्टिसहस्रवालखिल्याद्यसंख्यमुनिमण्डलपरिमण्डलितः कुण्डिकाक्षसूत्र-मण्डितभुजदण्डो हिण्डते स्म पुण्डरीकभवः ।

तदैव च स्थविष्ठकशिष्ठद्राघिष्ठह्रसिष्ठकुब्जादिविकृतशरीरभूतप्रेत-

---

१. 'इति बन्धुकामोऽसीति',
२. 'चैरुज्जहास । तदनु— तावद्०' ग. ङ.
३. 'पाटिता' घ.
४. 'ततश्च तस्य सर्वतोविस्तृतदाव' ग, 'ततश्च सर्वतो' ङ.
५. 'मरतक' ख. ग. ङ.
६. 'स तत्क्षणमेव तत्त',
७. 'नादिवृन्दारकवृन्द',
८. 'फालदेशा',
९. 'निसङ्घपरि',
१०. 'ततोऽपि च' ङ.

वेताळपूतनाडाकिनीकूष्माण्डाष्टभैरवप्रमुखप्रचुरप्रमथयूथसहस्रपरिवेष्टि-तोऽष्टमूर्तिरपि सप्ताकृतिः संहारकर्तापि रक्षां धारयन् कठोरकुठारशूल-शाली महादेवस्तस्य हृदयादुदयाञ्चकार ।

बाहुयुगळादपि वज्रिकरप्रज्वलितवज्रज्वालाजालदीपितं दण्डधर-भुजदण्डकाण्डताण्डवितचण्डतरदण्डस्फुटितस्फुलिङ्गोत्करोत्कीर्णं याद-सांपतिसम्पातानुपातिविविधजलचरकुलाकुलं यक्षाधिपानुगतलक्षाधिक-यक्षगुह्यकप्रक्षोभितं गन्धवाहागमनसन्तायमानसुगन्धप्रबन्धान्धीकृत-दिगन्तरं षट्षष्टिकोटिसंख्यसुराङ्गनानुनिस्सृतनिःसीमगन्धर्वकिन्नर-विद्याधरौघविद्योतितं त्रयस्त्रिंशत्कोटिप्रधानं निर्जरकुलं निर्जगाम । वद-नाद् दहनो नासाया नासत्यदस्रौ विलोचनाद्विरोचनश्च । मनसो-ऽपि घनसारजम्बालसंम्बाधशीतळमिव भुवनान्तराळमारचयन्नशेषतार-कासंजिराजितो रराज तारकाराजः ।

तदनुपदं च प्रतिक्षणभक्षितनरमांसप्रक्षरितक्षतजरसोक्षितरूक्ष-तराकृतिराक्षसगणोत्क्षुभितपार्श्वाः शेश्वीयमानाभिमाना दानवदैतेय-भटा लक्षकोटिशो लक्ष्यन्ते स्म ।

---

१. ' खप्रमथ ' ग.
२. ' भुजकाण्ड ' ख. ग. ङ.
३. ' नुवर्तिविविध ' ग. ङ.
४. ' षष्टिप्रकोटिसुराङ्गनाजनानु ',
५. ' संबाधशी ' ङ
६. ' तळितमिव ' क, तळीकृतमिव ' ग. ङ.
७. ' राजिनीराजितो ' क.
८. ' तदनन्तरं च ' ङ., ' तदनु प्रति ' ग.
९. ' सकुलोत्क्षु ',
१०. ' यवीरभटा ' ग. ङ.

तत्क्षणं च चक्षुरुत्क्षरितक्ष्वेळानलोष्मभीष्मतरभोगमण्डलोद्गीर्णशूत्कारमयोल्काभिघातोत्क्रुशित[1]लोकं सवासुकि सशेषं[2]मप्यशेषमुत्ससर्प दर्पोद्धतं सर्पकुलम् । अर्चिषश्च[3] तस्य विश्वतोमुखादुत्तस्थुः संप्रति[4]रथहस्तिपत्तितत्तदायुधसहस्राभिव्याप्तसप्तार्णवमध्यवर्तिसमस्त[5]धात्रीपतिचक्रसमावृताः साम्बप्रद्युम्नगदसारणानिरुद्धानुरुद्धाः सर्व एव वृष्णिवीरभटाः दक्षिणबाहोः अक्षतवीर्य‘स्तिष्ठतिष्ठे’ति निष्ठुरवादी कृष्टगाण्डीवः पाण्डववीरः प्रोदतिष्ठत । चलितहलमुखनिर्भिण्णमिव भ्रमितमुसलविक्षुण्णमिव विश्वं[6] करिष्यन् भीमकोपो वामबाहोः कामपालो[7] व्यालोकयत । पृष्ठतश्चोदतिष्ठन्[8] युधिष्ठिरादयश्चत्वारः । बाहवश्च तस्य[9] उदग्रतरोद्घूर्णचक्रशङ्खगदाशार्ङ्गनन्दकादिविविधायुधं[10]ज्वालामालालेलिह्यमानादिक्तटा अनेकशः प्रादुरासन् । सुपर्णश्च[11] सुवर्णवर्णस्वपर्णघूर्णनोदीर्णसामघोषघोषिताकाश आकाशे कोशाश्चक्रे[12] । तं च सकलजगदात्मानं परमात्मानं पाञ्चशर्वादयः[13] सर्वेऽपि[14] देहिनो भक्तिभरा[15]वनम्राः शक्त्यनुसारेण तत्र तत्र सिषेविरे ।

---

१. ‘तसकलल्लोकं’ ङ.
२. ‘षमप्युत्ससर्प’ क. ग, ‘षमुत्ससर्प’ ङ.
३. ‘श्च विश्व’ क.
४. ‘सरथहस्ति’ ग.
५. ‘स्तधरित्रीपतिचयसमा’ क. ग. ‘स्तधरित्रीपति’ ङ.
६. ‘भुवनं करि’ ग. ङ.
७. ‘लोऽप्याल्लोक्यत’ घ. ङ.
८. ‘ष्ठन् पाण्डवाश्चत्वारः’.
९. ‘स्योग्रतरो क, ‘स्योग्रतरोद्गीर्ण’ ग. ङ.
१०. ‘धजालव्यालोलितज्वा’ क.
११. ‘श्च तप्तसुवर्ण ग.’ ङ.
१२. ‘चाकाशाश्चक्रे’ क, प्रकाशाश्चक्रे’ ङ.
१३. ‘पद्मजशर्वा’ घ.
१४. ‘पि विश्ववासिनो भक्ति’ ग.
१५. ‘भरा’ घ.

ततश्च[1] निबद्धाञ्जलि[2]मुनिस्तोमप्रस्तुत[3]विचित्रतरस्तोत्रनिनादैः[4] सुरतरुणीजनचरणा[5]विसञ्जितमणिमञ्जीरमञ्जुशिञ्जितानुबन्धिगन्धर्वकिन्नरवीणावेणुगीत[6]तालप्रणादैः वृन्दारकवृन्दाहतदुन्दुभिसं[7]भूतगम्भीरध्वनिभिश्चतुर्मुखचतुर्मुखीसमुन्मिषितब्रह्मघोषैरानन्दताण्डवोद्दण्डखण्डपरशुकरहिण्डितडिण्डिमचण्डरवमिळिततण्डुमृदङ्ग[8]चण्डिकागानध्वानैः[9][10] रुद्रानुचरभूतप्रेतवेताळपाळिकाहर्षवल्गनोद्भूतकहकहि[11]कानुमळिताष्टभैरवाट्टहासैः भगवत्कराञ्चितपाञ्चजन्यस्वयमुदीर्ण[12]धीरनिनादैरपि न केवलं तत्पुरं जनपदो वा भुवन[13]मपि सर्वं संघोषमयमासीत्[14] ।

तत्तेजोनष्टदृष्टिप्रसरमत इतः कर्णदुर्योधनाद्या
भूपाः प्रागेव पेतुः[15] स च[16] विदुरकृपद्रोणभीष्मादिलोकः ।
मूर्धन्याबद्धहस्तः सुबहु[17] जय जयेत्युच्चकैरुच्चरंस्तं
दृष्ट्वा[18] दृष्ट्वा चिराय स्वरसपरचिदानन्दसिन्धौ न्यमाङ्क्षीत् ॥

---

१. 'तदानीं च' क. २. 'लिसमस्तमुनि' क.
३. 'तस्तोत्र' ग.
४. 'निनदैः' क. ग. ङ, निनदैर्मधुरतरलास्यैः सेवाप्रवृत्तसुरतरुणीचरणसञ्जित' ङ.
५. 'णीचरणाव' क, णीजनचरणास' ख. ग.
६. 'गीततारप्रणादैः' क. 'गीतारावप्रणा' ङ,
७. 'भिराहतसम्भू' क. ङ. ८. 'कराहतडिण्डिम' क.
९. 'ङ्गरवानुगतचण्डिकागानध्वनितैः' ङ.
१०. 'ध्वानैः' ग. ११. 'कारवानु' क. ग. ङ.
१२. 'मुदीरितधीरनिनदैः' ग. ङ.
१३. 'नमशेषमपि घोष' ङ.
१४. 'सीत् ॥ तत्र च– तत्तेजो क.
१५. 'तुर्भुवि विदुर' ग. घ. १६. 'तु' क. ङ.
१७. 'सपदि जय' ग. ङ. १८. 'दृष्ट्या दृष्ट्वा ङ.

पुत्रस्नेहाकुलं मामयि! बत भगवन् वस्तुतस्त्वत्प्रपन्नं
जानीहीत्यार्तलापे कुरुपितरि जवाद् दृष्टिरस्योदमीलत् ।
सोऽप्यानन्देन पश्यन् परपुरुषममुं निःस्पृहोऽन्यावलोके
प्रज्ञाचक्षुष्ट्वमेव प्रकृतिजमवृणोद् धन्यजन्मा नृपालः* ॥११२॥

ओजस्तवेदमुपसंहर माधवेति
घुष्यत्सु सत्सु गुरुभीष्मपुरोगमेषु ।
घोरं विहाय निमिषेण कुशेशयाक्षो
गोपीदृशां कुतुकहेतुमवाप रूपम् ॥ ११३ ॥

दिष्ट्या वीरजनप्रियं परिणतं तावद्रणं दारुणं
निर्यान्तु[1] स्वचमूचयैः सह महीपाला गृहीतायुधाः ।
पश्यन्त्वत्र पृथाभुवां प्रमथितप्रत्यर्थिशस्त्रोत्करो[2]-
त्कीर्णानुग्रतरानुभावविभवान्[3] दोर्विक्रमप्रक्रमान्† ॥ ११४ ॥

---

अतः परं—* 'इत्थं प्रक्षोभ्य भिद्यद्धृदयमत इतो भीषिताशेषलोकं
निःशेषं हस्तिनाख्यं पुरमथ भगवान् संहृताशेषरूपः ।
वृष्णिश्रेष्ठः प्रतस्थे सभयमनुगतानप्रवीक्ष्यैव सर्वान्
भूपालान् पाण्डुसूनोरभिवसतिमहो पाण्डुपुत्राः कृतार्थाः ॥
इत्यधिकतया दृश्यते ङपाठे.

अतः परं—† यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद् विस्मर्तुमपीहितं शमवता शान्ति कुलस्येच्छता ।
तद् द्यूतारणिसंभृतं नृपवधूकेशाम्बराकर्षणैः
क्रोधज्योतिरहो महत् कुरुवने यौधिष्ठिरं जृम्भताम् ॥

---

१. 'न्तु प्रबलैर्बलैः सह' ङ.  २. 'रोदग्रानुग्र' ङ.
३. 'परानुभावभियदां दर्वीकरप्रक्रमात्' ङ.

आस्थानाद् बहिरेत्य कैटभरिपुर्गाङ्गेयमलिङ्ग्य तं
पश्चार्धे परिमृश्य भूपमितरानापृच्छ्य सर्वान् कुरून् ।
आघ्रायातिचिरेण मूर्ध्नि विदुरं युक्तं शताङ्गं हयै-
रारूढो हि ययौ विराटनगरीमन्तः स्मरन् पाण्डवान् ॥११

दूतवाक्यं समाप्तम् ।

---

अथ रथवरमश्वैः सैन्यमुख्यैश्चतुर्भि-
र्धृतरसमधिरूढः क्षत्तुराकर्ण्य वृत्तम् ।
अनुगतमखिलं तद्राजकं वारयित्वा
परिमितपरिवारः पार्थपार्श्वं जगाम ॥

नारायणाभिधमहीसुरवर्यवक्त्र-
जैवातृकामृतझरीनिकरायमाणम् ।
हृद्यं प्रबन्धमिदमद्य समाप्तमुच्च-
दूत्यं समस्तमनवद्यविराजिपद्यम् ॥

दूतवाक्यसमाख्याननिबन्धनवरं महत् ।
सम्मतं कृत्स्नविदुषां गीयते जगतीतले ॥

दूतवाक्यप्रबन्धः समाप्तः । इति कपाठे.

॥ श्री ॥

श्रीनारायणभट्टविरचितः

# किरातप्रबन्धः ।

*कृते च किर्मीरवधे बकारिणा
वनं गतः काम्यकमस्तकण्टकम् ।
युधिष्ठिरो धौम्यमुखैः सह द्विजैः
स्थितिं व्यधाद् द्वैतवनान्तिके चिरम् ॥ १ ॥

युधिष्ठिरः सत्यवतीसुतान्मुने-
रवाप्य विद्यामरिनिर्जयोत्सुकः ।
जिष्णुं समाहूय वचः समाददे
पुरद्विषः पाशुपतास्त्रलब्धये ॥ २ ॥

गान्धारीतनयस्य निर्घृणतया राज्यं न नो दीयते
भीष्मद्रोणपुरोगमैर्नृपगणैः सार्धं विरोधो भवेत् ।
तस्मादर्जुन! दुर्जनान्तकर! ते स्वस्त्यस्तु गत्वा गिरिं
बाणं पाशुपतं ग्रहीतुमधुना मारारिमाराधय ॥ ३ ॥

---

* आदितो द्वौ श्लोकौ कपाठे, आदितो नव श्लोकाः ख ग पाठयोश्च न दृश्यन्ते ।

---

१. ' णकृपादिभिर्नृप ' घ.

गुरोरनुज्ञामधिगम्य भूयः
समेत्य कैलासगिरेः समीपम् ।
हरं समाराधयितुं यतात्मा
धनञ्जयस्तत्र तपश्चकार* ॥ ४ ॥

फलेन पर्णेन जलेन वायुना
स्थितिं शरीरस्य स कल्पयन् क्रमात् ।
उपोढकार्श्योऽधिकनिर्मलोऽन्वहं
बभूव पक्षे बहुले यथा शशी¶ ॥ ५ ॥

ततः सर्वान् परित्यज्य नियमान् मुनिसेवितान् ।
स तु पञ्चाग्निमध्यस्थः पदाङ्गुष्ठाग्रविष्ठितः ॥ ६ ॥

इन्द्रियपञ्चकतुरगा-
निन्द्रसुतो हृदयमन्दुरानिलये ।
चन्द्राभरणस्तम्भे
हन्त बबन्धाशु धैर्यपाशेन ॥ ७ ॥

अहं शिवः शिवः सर्वं सर्वं सोऽहमहं शिवः ।
शिवादन्यज्जगत्यस्मिन् न किञ्चित् प्रतिपद्यते ॥ ८ ॥

उदग्रतेजोभिरहतैर्महर्षिभि-
र्निवेदिते तादृशि सव्यसाचिनि ।

---

* इतोऽनन्तरं घपाठे 'इन्द्रियपञ्चक०,' 'फलेन पर्णेन०' इति पद्यक्रमः

¶ अतः परं घपाठे–

तस्याथ नारदमुखात् तपसः प्रभावं श्रुत्वा हरस्त्रिजगतामधिपो दयालुः ।
देव्या दृशा सदसि सूचिततद्दिदृक्षुर्दित्सन्नभीष्टमपि लुब्धकतामयासीत् ॥
इति पद्यमधिकम् । तदनन्तरं 'देवो लोक०' इति च दृश्यते

तपश्चरन्तं तमनन्यदैवतं
विज्ञापयामास गिरीशमम्बिका ॥ ९ ॥

देवो लोकशिवंकरः खलु शिवो देवेन्द्रसूनोरपा-
स्योद्यद्दर्पभरं वरानभिमतान् दातुं विरोधिच्छिदः ।
कैरातं वपुरास्थितः स्थिरचरौघात्मा कृतात्मोचमं
गन्तुं प्रक्रमते स्म विक्रमनिधिं चाखेटकूटेन तम् ॥ १० ॥

देवी देवं सोमचूडं निकाम-
प्रेमा सोमा प्राप्तकैरातवेषम् ।
प्रेक्ष्य प्रेक्ष्यं तत्सदृक्षं तदानी-
मूरीचक्रे चारु रूपं शबर्याः ॥ ११ ॥

¶केचिद् भूताः प्रभूताः कटुतरघनबुक्कारवाः कुक्कुरौघा
जाताः कोदण्डरूपाः कतिचन कतिचिद्वागुराभाररूपाः ।
तद्दण्डाः केऽपि पाशाः कतिचन कतिचिद्वागुराद्यं[1] वहन्त-
श्चान्ये चापेषु[2]दोषः पुरहरमनुजग्मुः पुळिन्देन्द्रवेषाः ॥ १२ ॥

*[3]तदनु परमकारुणिकः स खलु परमेश्वरः परिगृहीतशबरराजा[4]-कृतिः परिलसितबर्हि[5]बर्हबन्धबन्धुरकेशभारः ताम्रतरश्मश्रुनेत्रयुगळाति-भीषण[6]मुखपुण्डरीकः काचमयगुञ्जामयदामनिकरविराजितवक्षोभागः

¶ पद्यमिदं गपाठे ‘ तदनु– ’ इति गद्यानन्तरं दृश्यते ।

* गद्यमिदं क ख पाठयोर्नास्ति ।

१. ‘ द्यावहन्तः ’ क.     २. ‘ धन्वेषुदोषः ख. ग. ‘ धन्वेषुवेषः ’ घ.
३. ‘ अथ स भगवान् परम ’ घ.     ४. ‘ राजवेषः परि ’ घ.
५. ‘ बर्हबन्धुर ’ घ.
६. ‘ णवक्त्रान्तराळः काचगुञ्जामयजाळभासुरवक्षोदेशः शङ्ख ’ घ.

शङ्खवलयालङ्कृतकरतलकलितकार्मुकबाणसञ्चयः [1]सितेतराम्बरपरिकलितकमनीयकटीतटदेशः चरणविन्यास[2]कम्पितधरणीमण्डलः[3] तदनन्तरं तदभिवीक्ष्य ससम्भ्रममशेषजगत्सवित्र्या गृहीतवनचरवनितागात्रया वेत्रनिर्मितपात्रखनित्रया गोत्रराजपुत्र्या[4] सत्रा गोत्रारिनन्दनमनुजिघृक्षुः[5] गिरीशादयं गिरिशः प्रतस्थे[6]† ॥

एवम्भूतैर्भूतजातैः[7] परीतो भूताधीशः प्रस्थतः प्रस्थितोऽसौ ।
श्वेताहार्यस्यार्ययावार्यघोषं तेने कूटाखेटमेषोऽटवीषु ॥ १३ ॥

§अनन्तरं च सरभसमतइतो गजयूथपतिविलुलितकमलिनीपरिमळः इतः क्रोडकुलदृश्यमानभद्रमुस्तारसामोदः इतः करिकळभभज्यमानसल्लकीकषायगन्धः इतो निपतितशुष्कपत्रमर्मरध्वनिः इतो वनमहिषविषाणकोटिभिद्यमानवल्मीकधूळिः इतो मृगकदम्बकम् इतो वनगजक्रन्दितम् इतः शिखण्डिकुलविरुतम् इतः कपिञ्जलकूजितम् इयमार्द्रपङ्कमलिना वराहपद्धतिः इयमभिनवशष्परसश्यामळा हरिणरोमन्थफेनबिन्दुसंहतिः एषा प्रत्यग्रप्रसूतमृगीगर्भरुधिरलोहिनी भूमिः चमरपङ्क्तिरियम् अनुगम्यतामुच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली तरुशिखरमारुह्यतामालोक्यतां दिगियमाकर्ण्यतामयं शब्दः गृह्यतां धनुः अवहितैः स्थीयतां मुच्यन्तां श्वानः इत्यन्योन्य-

---

† अतः परं घपाठे ' एवम्भूतैः ' इत्यारभ्य १४ तमश्लोकान्तं नास्ति ।
§ कपाठे गद्यमिदं नास्ति ।

---

१. 'याञ्चितबाहुदण्डकलितकोदण्डबाण ' घ.
२. ' नीलतरवसनभासुरकटितटः चरण ' घ.
३. ' सकम्पित ' घ.    ४. 'कः तदभिप्रेक्ष्य तदनुरूपवेषया गृहीत' घ.
५. ' पुत्र्या सुत्रामसूनुमनु ' घ.    ६. ' क्षुः क्षणादेव गिरी ' घ.
७. ' जालैः ' क.

मभिवदता मृगयाप्रसक्तस्य महतो जनसमूहस्य तरुगहनानीतविग्रहस्य क्षोदितकाननः कोलाहलोऽभूत् ॥

†आपादलम्बिजटमातपमात्रभक्ष-
मूर्ध्वीभवद्भुजमुदारतपःकृशाङ्गम् ।
दृष्ट्वानुगृह्य कुरुवीरमुनीन्द्रमेवं
त्रेधा बभूव सुतवत्सलता भवान्याः ॥ १४ ॥

संक्रन्दनात्मजनुषा सह संप्रहारे
संक्रीडितुं कुतुकवानुडुराजचूडः ।
संघर्षसंघटनकारणमिन्द्रसूना-
वङ्कूरयन् क्षणमसौ वनसीम्नि तस्थौ ॥ १५ ॥

एतस्मिन्नन्तरेऽतर्कितसमुपगमक्षोदितो धार्तराष्ट्रैः
पार्थव्यापादनाय प्रकटितविकटस्तब्धरोमस्वरूपः ।
भिन्दन्नुग्रैः खुराग्रैः क्षितिमवसरलाभोद्भवद्भूरिहर्षो
मूकाख्यः कोऽपि दैत्यः सपदि गतभयस्तत्प्रदेशं[1] जगाहे* ॥१६॥

निध्यायोद्धतमिद्धरोषमभियं[2] तं चाभिथन्तं[3] सुतो
वृत्रारेर्न तु[4] वन्य एष नियतं घोराकृतिः सूकरः ।

---

† पद्यमिदं ' ख ग पाठयोर्नास्ति ।

* इतः परं घपाठे—

तं वीक्ष्य रौद्रवपुषं मृगशावकेषु त्रासाद्दिशत्सु कटिलम्बितवल्कभागान् ।
पर्याकुले कलकलैरपि पक्षिजाले पार्थो निवृत्य नियमाज्जगृहे शरासम् ॥

इति पद्यमधिकं दृश्यते ॥

---

१. ' प्रपेदे ' घ.  २. ' मभियान्तं चाभियं तं ' ख. ग.
३. ' यान्तं ' घ.  ४. ' हि ' घ.

दैत्यः कोऽपि जिघांसुरंसळतमो मा याति मायाहित-
क्रोडाकार[1]मिमं नयामि यमधामेत्यादद्दे कार्मुकम्[2] ॥ १७

विशिखो विजयेन वेगतोऽस्तः
शबरेणापि च पोत्रिणोऽङ्गभेदम् ।
व्यतनोदतनोः पपात चासौ
विपुलायां विपुलारवः परासुः* ॥ १८ ॥

$तमुद्धर्तुमुद्युक्ते तस्मिन् मार्गति मार्गणम् ।
सचापः कोऽपि [3]शबरस्तमुपेत्येदमब्रवीत् ॥ १९ ॥

सविधगहनवर्ती [4]भूधरेन्द्रस्य भर्ता
नृवर! शबरराजः [5]प्रेक्षितुं काङ्क्षते त्वाम् ।
अपरिमितमहिम्नस्तस्य भृत्यं विवक्षुं
कमपि समुपयातं विद्धि मां तन्नियोगात् ॥ २० ॥

तदीयशररंहसा हतमवेहि चैनं मृगं
लघीयसि तवाशुगे कथय शक्तिरीदृक् कुतः ।

---

* अतः परं घपाठे–

भोक्ताहं प्राणिवृन्दस्य विदितो भुवि सर्वथा ।
किमर्थं च त्वया विद्धं मृगोऽयं मत्परिग्रहः ॥

इति पद्यमधिकं वर्तते ।

$ एतदारभ्य घपाठे २७ तमश्लोकान्तं नास्ति ।

---

१. ' कार इमं नया ' ख. ग. ' कारममुं नया ' घ. २. ' सायकम् ॥ '
३. ' शबरः कथयामास वासविम् ॥ ' ग.
४. ' भूधरस्यास्य ' ख. ग.
५. ' प्रेक्षितव्यस्त्वयाद्य । अनुपमगुणधाम्नस्तस्य ' ग.

महत्तरमहीधरप्रवरपक्षविच्छेदने
पविः प्रभवति स्वयं न खलु तूललेशः क्वचित् ॥ २१ ॥

लक्ष्यं तस्य चमूपतेरपहृतं तावत् त्वयास्त्विदं
संरक्ष्यः कृतमन्तुरप्यशरणः क्षुद्रो हि लोकोत्तरैः ।
बाणं तु प्रणिपत्य देहि शमयन् कोपं प्रमादोद्भवं
नो [1]चेदत्र तपस्यितुं क्षणमवस्थातुं च सर्वत्र वा ॥ २२ ॥

हंहो क्षुद्र! किरात! वस्त्वविदिते तुभ्यं मृगे[2]भ्यः परं
मादृक् कुप्यति को नु [3]शौर्यविभवो मांसपाकमात्राशिने ।
अस्मद्बाणमनन्यदृश्यमहिमाभोगं त्वया लिप्सुना
यत्तूक्तं परुषं तदुत्तरगिरां दातायमेव क्षमी* ॥ २३ ॥

किञ्चाधुना तपसितात्र वने विविक्ते
नेच्छामि वोऽभिगमवीक्षणभाषणानि ।
तद् गच्छ सत्वरमितोऽथ न [4]चेदिदानीं
सज्यं धनुः करधृतं विशिखं च तीक्ष्णम् ॥ २४ ॥

निरस्यथा मा कुलमस्मदीयं
कस्मिन् कुले जाल्म पितामही ते ।

* अतः परं ख ग पाठयोः पद्यमिदमधिकं दृश्यते–

लक्ष्यं यत्सायकालामहृषि किल स चेदीश्वरस्तेऽद्य माभि-
क्रुध्यत्यायातु तावन्मदिषुहृतममुं वन्यमन्वेतु सत्वम् ।
भर्ता शैलस्य कोऽन्यो जगति पशुपतेरस्य विश्वस्य वा स्यात्
त्रस्तं यस्मादिहान्यत्र च भुवि कथयस्यक्षमं वर्तितुं माम् ॥

1. 'चेन्नात्र' ख. ग.  2. 'भ्योऽपरं' ख. ग.
3. 'धैर्यविभवो' ख. ग.  4. 'चेदिदं मे' ग.

तातस्य जातेति वदावदं त-
मपोढवानस्त्रबलेन पार्थः ॥ २५ ॥

आरादस्त्राभिभूते झटिति विलुठति भ्रान्तचित्ते स्वभृत्ये
गूढामोदः किरातेष्वधिपतिरभिनीतोग्रसंरम्भजृम्भः ।
विष्वद्रीचीं विकर्षन् विसृमरविविधध्वानरुद्धाखिलाशां
पौळिन्दीं वाहिनीं तां वलमथनभुवः सन्निधिं सम्प्रपेदे ॥ २७ ॥

रे क्षुद्रात्मन्! किरात! श्वगणपरिवृतः क्षुल्लकैः सार्धमेभि-
र्मार्गन् मार्गाण्यभीक्ष्णं गिरितटभुवि नो वेत्सि वृत्तानि राज्ञाम् ।
अज्ञात्वा तत्त्वतो माममरपुरवधूगीयमानापदानं
युद्धायासि प्रवृत्तः फलमनुभव तस्याविवेकस्य सद्यः ॥ २७ ॥

रे क्षुद्र! क्षितिपतिवंशकीट! साक्षात्
कर्तारं जगदवगच्छ साम्प्रतं माम् ।
यद्वंशं व्यपदिशसि स्फुटं तमेनं
जानामि प्रकटकलङ्कबंहिमानम् ॥ २८ ॥

पारस्त्रैणेयं च तस्यात्मजं तं
जानाम्येवं त्वादृशां वंशबीजम् ।
तद्वंश्यानां वेद्मि मुख्यं ययातिं
विप्रस्त्रीं तां योऽभिकः पर्यगृह्णात् ॥ २९ ॥

तद्वंश्यस्य च शन्तनोर्न चरितं केनेह विज्ञायते
यस्तां दाशपतेरुपायत सुतां कामातुरः पुंश्चलीम् ।

---

१. 'रभिभूतोग्र' ख. ग. २. 'स्वान' ख. ग.
३. 'तमेतं' ख. ग. ४. 'ष' ग.

तत्पुत्रस्य सुतं च गोळकमहं[1] जानामि पाण्डुं पुन-
र्युष्मान् पञ्च तदात्मजांश्च सुतरां जानामि कुण्डानिमान् ॥३०॥

अथ [2]किमपि रहस्यं त्वाद्य पृच्छामि कस्मा-
न्नृपदुहितरमेकां पञ्च पर्यग्रहीष्ट[3]म् ।
भवतु परमपीतः संप्रदास्ये चतस्रः
परिणयत किरातीः साधु मां प्रार्थयस्व ॥ ३१ ॥

*मध्येराजसमं हठेन भवतामग्रे ननु प्रेयसीं
पत्नीं हन्त! नमः शिवाय! रिपुभिस्तावत् तथा क्लेशिताम् ।
नेत्राभ्यामवलोकयन् यदभवस्तूष्णीं ततो [4]ज्ञायते
[5]विक्रान्तिस्तव तादृशो यदि यशस्त्रैलोक्यमाक्रामति ॥ ३२ ॥

तिष्ठत्वेतदशेषमेव बहुमन्तव्यं पुनस्तावकं
वृत्तं वेद्मि [6]विशिष्टसेव्यमुचितं बुद्ध्वा यदासेवसे ।
छेत्ता ब्रह्मशिरः श्मशानवसतिर्दक्षाध्वरध्वंसको
भूतप्रेतपतिः [7]स पश्यतु भवान् केनापरेणार्च्यते ॥ ३३ ॥

प्रणिन्दनं त्रिपुरवधूमदच्छिदो
जगत्पतेर्निशमयतः किरीटिनः ।

---

* पद्यमिदं ख ग पाठयोः ३३ तमपद्यानन्तरं वर्तते ।

---

१. 'महं' ग.  २. 'कमपि' विशेषं त्वां तु पृ' ग
३. 'ष्वम्' क.  ४. 'ज्ञायसे' ..
५. 'विक्रान्तस्तव' ख. ग. घ.  ६. 'विशिष्य सेव्य' ख. ग.
७. 'स वै पशुपतिः केना' घ.

हृदि क्षणादथ[1] रितकल्पपावकः
प्रवर्धते प्रतिघहुताशनः पुरा ॥ ३४ ॥

रे रे मांसिकपाश! यत् त्वमधुना चन्द्रस्य वन्द्यं कुलं
साक्षान्निन्दसि गर्हसे यदपि नः सर्वं तदेतत् सहे ।
यत् त्वेवं त्रिपुरद्रुहो भगवतः कुत्सां विधत्सेतरां
तच्छ्रोतारमहो धिगद्य बत मां धिग् गाण्डिवं हा शरान्* ॥३५॥

$इत्थं वाग्भी रुषितहृदयौ व्याधराजेन्द्रसूनू
गर्जन्तौ तौ कलुषितदृशौ भ्रूकुटीभीषणास्यौ ।
तावत् तीक्ष्णैरतिशितशिखैः सायकैः पीडयन्ता-
वन्योन्यं तौ निखिलभयदं चक्रतुः सम्प्रहारम् ॥ ३६ ॥

कारुण्यपूरमृदुलेन हृदा किरातो
रोषातिरेककलुषेण च पाण्डुसूनुः ।

---

* इतः परं ख ग पाठयोः पद्यद्वयमिदमधिकं वर्तते—
सोऽहं दुर्मेधसस्ते झटिति रणमुखे कद्रुदस्यास्य बाणैः
छिन्दे मूर्धानमुग्रैरपगतकरुणं पश्यतां पाण्डवानाम् ।
एताश्चापेतगर्वा नयनपरिगलद्भूरिबाष्पाम्बुधारा-
स्तन्वङ्ग्यस्तावकीनाः सुचिरमनुभवन्त्वेव वैधव्यदुःखम् ॥

ततस्तौ तत्र संक्रुद्धौ गर्जमानौ मुहुर्मुहुः ।
शरैराशीविषाकारैस्ततक्षाते परस्परम् ॥

$ पद्यमिदं ख ग पाठयोर्नास्ति ।

---

1. ' बाडवानलः ' ग.

अल्पं महान्तमपि[1] विक्रममादधाना-[2]
वातेनतुश्चिरतरं समरं समानम्* ॥ ३७ ॥

* इतोऽनन्तरं पद्यषट्कस्थाने खपाठे पद्यचतुष्कमिदं बहुत त्रुटितं दृश्यते—
ततः किरातार्जुनचापमुक्तान्यस्त्राणि दिव्यान्यतुलप्रभावम् ।
दवीयसामप्यमरेश्वराणां भयं चिराय प्रशयाम्बभूवुः ॥(?)

उपरोद्धुमपारयन् प्रभावं महनीयं विजयस्य मर्त्यवृत्त्या ।
उररीकुरुते ... ... .... रमप्रमेयमोजः ॥

आविःप्रसादमनलेन पुरा वितीर्णावक्षय्यभासुर .... .... ।
... पुराणपुरुषस्य हृतस्वभावौ तूणौ क्षणादभवतां विजयस्य शून्यौ ॥

प्रसरद्ध्वनिपूरितान्तरिक्षं प्रहरन्तौ स्म पिनाकगाण्डिवाभ्याम् ।
शबरेन्द्रपुरन्दरात्मजौ तौ चिरमायोधनकेळिमादधाते ॥,

गपाठे तु पद्यपञ्चकमिदं दृश्यते--

आग्नेयं वारुणं ब्राह्मं वायव्यं भोगिबन्धनम् ।
चिक्षेप शिक्षितुं धीमानस्त्रं पार्थाय शङ्करः ॥

वारुणं बाडवं ब्राह्मं पार्वतं चापि गारुडम् ।
किरातास्त्रनिरोधार्थमस्त्रं चिक्षेप पाण्डवः ॥

दग्धं फालविलोचनानलकणैर्गङ्गाजलैः क्षाळितं
कोटीरावृतभोगिपुङ्गवफणाबद्धाश्मसंरञ्जितम् ।
संसिक्तं गळकाळकूटगरळस्वेदाङ्कुरैः शाङ्करै-
श्चिक्षेप क्षणमर्जुनः पुरहरे बाणौघमेवंविधम् ॥

संक्रुद्धे शतमन्युजन्मनि शरान्मोक्तुं प्रवृत्ते खरान्
सामान्यं शबरं विशङ्क्य शशभृन्मौलिं जगन्नायकम् ।
देवी जातदया व्यधत्त तदिषून् पुष्पाविशेषाकृतिं
दृश्यो मार इवैष रोषविसरोन्मुक्तेषुरीशे तदा ॥

पार्वतीशापनिर्वाणः फल्गुनो धनुषा रुषा ।
पीडयामास तं साक्षादव्ययं परमेश्वरम् ॥

१. 'मिव' क. ख. ग. २. 'ददाना' ख. ग.

अर्जुनस्य धनुर्मुक्तो बाणजालोऽनलप्रभः ।
शिवं भित्त्वा भुवं भित्त्वा त्रैलोक्ये संचचार ह ॥ ३८ ॥

आग्नेयं वारुणेनाथ माहेन्द्रं मारुतेन च ।
ब्राह्मं च वैष्णवेनायमेवं सर्वं व्यनाशयत् ॥ ३९ ॥

ततः क्रुध्यत्यस्मिन् प्रहरति शितैः सायकगणै-
र्विदीर्णाङ्गं दृष्ट्वा निजपतिमसावाकुलमनाः ।
व्रजेयुः पुष्पत्वं सपदि विशिखाः साहसकृत-
स्तवेत्येवं शापं व्यसृजदिह तस्मै गिरिसुता ॥ ४० ॥

तावत् तूणीमुखात् तानहह! शरवरान् वीक्ष्य पुष्पाणि पार्थः
क्रुद्धो वेगेन तस्मिन् व्यधित सुमुहतीं पुष्पवृष्टिं किराते ।
दृष्ट्वा सा गोत्रकन्या प्रियमथ सुमनोगूढमूर्तिं विषण्णा
चक्रे शक्रात्मजं तं पुनरपि समरे पुष्पबाणैर्विहीनम् ॥ ४१ ॥

शरवररहिते निषङ्गयुग्मे
सुरवरसूनुरतीव रोषशाली ।
व्यतनुत धनुषाथ ताडनं तं
शबरवरं कठिनेन गाण्डिवेन ॥ ४२ ॥

तद्धनुःप्रहरणातिरुष्टधी-
र्व्याधराडपि विवृद्धमत्सरः ।

---

किन्तु घपाठे ३८, ३९ तमपद्यद्वयस्थाने पद्यमिदमेकं दृश्यते—

नागास्त्रं वपुषो विभूषणमभूदाग्नेयमत्युज्ज्वलं
निर्वाणं सुरसिन्धुपाथसि ददावत्यन्तरुष्टोऽर्जुनः ।
भूषाजालभुजङ्गमैः कबलितं वायव्यमस्त्रं पुन-
स्सिक्तं यत्तु विषेण तत् खलु शशी सद्यः सिषेचामृतैः ॥

---

१. 'मपि सुम' घ.

पार्थमात्मधनुषा च ताडनं
कर्तुमारभत घोरदर्शनः ॥ ४३ ॥

*प्रादुष्षन्तं विश्वसंहारदक्षं
क्वापि क्वापि क्रोधलेशं पुरारेः ।
मा मा पार्थः सोऽयमित्यात्तभीतिः
शान्तिं निन्ये स्मारयन्ती किराती¶ ॥ ४४ ॥

शिरसि धनुरटन्या ताड्यमानस्य शम्भो-
रलिकनयनकोणे किञ्चिदारज्यमाने ।
उपनिषदुपगूढं[1] रुद्रमुद्घोषयन्ती
परिहरति किराती मध्यमं पाण्डवानाम् ॥ ४५ ॥

बीभत्सुनाथ धनुषा ताडितं चन्द्रशेखरम् ।
दृष्ट्वा शरासनं तस्य जाह्नव्यापहृतं बलात् ॥ ४६ ॥

§असिमुद्यम्य तरसा पार्थो रुद्रमभिद्रुतः ।
चिच्छेद विशिखेनान्यैरच्छेद्यमसिमीश्वरः ॥ ४७ ॥

---

* पद्यमिदं घपाठे नास्ति ।

¶ इतः परं खपाठे (४५–४९) पद्यपञ्चकस्थाने पद्यमिदमेकं दृश्यते—
प्रहितं वदने कराळघोणे कठिनस्थूलहनौ पृथासुतेन ।
द्विजराजनिभं शरासनं तत् प्रणिपप्सौ(?) सहसैव लुब्धकेन्द्रः ॥
गपाठे तु इतः परमिदं पद्यमधिकं दृश्यते—
प्रहरति धनुषा रुषैव पार्थे वपुषि शिवापरिरम्भभुग्नसौख्ये ।
कुचवलयपदानि शैलजायाः परिहरति स्म भृशं पिनाकपाणिः ॥

§ ग घ पाठयोः ४७, ४८, ४९ तमपद्यानि न सन्ति ।

---

1. 'दुपगीतं रुद्र-' ग.

छुरिकां जिष्णुरुद्यम्य हरस्योरस्यताडयत् ।
प्रकोष्ठेनाशु चिच्छेद तां तदा वृषभध्वजः ॥ ४८ ॥

शिलासङ्घैर्वृक्षसङ्घैर्जघ्नतुश्च परस्परम् ।
तावुभौ रोषसम्पन्नौ श्वेताश्वपरमेश्वरौ ॥ ४९ ॥

गाढमुष्टितलजानुनिपात-
ध्वानपूरितदिगन्तनिकुञ्जौ ।
तौ चिराय कुरुतः स्म नियुद्धं
व्याधराजसुरराजकुमारौ ॥ ५० ॥

बाहुभ्यामभिवृद्धतालकठिनस्थूलायताभ्यां[1] हठा-
दापीड्योरसि विस्तृते मृगयुना व्याधूय मुक्तो जवात् ।
[2]विस्रस्तावयवः क्षणाद्[3] व्यपगताशेषाभिमानः श्वसन्
मूर्च्छाकुड्मळितेक्षणः स्रवदसृग्वक्त्रः पपातार्जुनः* ॥ ५१ ॥

हा कष्टं पिण्डीभूततनुरहम् । किं नु खलु मयि नानुकूलो भगवान् व्योमकेशः । किं नु खल्वीदृशो मम पराक्रमस्य परिपाकः । किं नु खलु वक्ष्यामि राजानमजातशत्रुम् । हा कष्टं वृथैव मन्मात्रा गर्भ-भरणक्लेशोऽनुभूतः । कथमिव धार्तराष्ट्राणां पुरतो निर्लज्जो गच्छामि ।

---

* इतः परं खपाठे पद्यमिदमधिकं दृश्यते—

अथ भगवतः कारुण्येन द्विषस्त्रिसृणां पुरां
कथमपि सुतः पाकद्वेष्टुः समागतचेतनः ।
विगळितमहागर्वोन्मेषः प्रशान्तमनाः परं
शरणमगमत् साक्षात् सर्वात्मना शशिशेखरम् ॥

---

१. ‘ भ्यां जवा ’ घ.　　२. ‘ विस्रस्ता ’ क.
३. ‘ क्षणव्यप ’ ख. ग.

हा कष्टं धर्मराजानुजः श्रीकृष्णप्रियवयस्यो द्रोणाचार्यशिष्यः वृकोदरसहोदरो गाण्डीवधन्वा सन्नपि विजयः केनापि वनेचरेणानस्त्रज्ञेन चापाद्यायुधेष्वनिपुणेन पराजितोऽभूदिति सकलजनापहास्यो भविष्यामि*। परिहासपात्रस्य मे किं जीवितेन। हा मातः! कुन्तिभोजतनये! अर्जुनगतमपत्यस्नेहमन्येषु चतुर्षु पुत्रेषु संविभजस्व।

अवमानात् परं मृत्युः क्षत्रियाणां विशेषतः।
तस्मादद्य मरिष्यामि नाश्नाहं[1] जीवितास्पदम् ॥ ५२ ॥

§धर्मसूनोर्गतो मोहो दुर्योधनगता मही।
चण्डालपीडितस्यास्य कुतो मे हरदर्शनम् ॥ ५३ ॥

इत्थं प्रतापं कलयन् मृदा तं
कृत्वा गिरीशं भृशभक्तिचेताः।

---

* इतः परं ख ग पाठयोः ५४ तमपद्यान्तो भागो नास्ति।, किन्तु गपाठे 'भविष्यामि' इत्यनन्तरं पद्यमिदमधिकं दृश्यते--

किं प्राणैः किं धनैर्मित्रैर्भार्यया बान्धवैरपि।
निर्जितोऽहं किरातेन यतस्तन्मे कुतः सुखम् ॥,

अपिच घपाठे 'भविष्यामी'त्यनन्तरं ५२ तमपद्यं वर्तते।

§ ५३, ५४, ५५ तमश्लोकत्रयस्थाने घपाठे पद्यत्रयमिदं दृश्यते-

मुग्धेन्दुशेखर! भवन्तमहं तपस्यन् केनापि लुब्धककुलेन पराजितोऽस्मि।
मा भूत्तवेदमयशो बहुशो नमस्ते क्षिप्रं प्रसीद मयि लुब्धकलुप्तजीवे ॥

इति स्तुवन् निस्तुलभक्तिभारः स निर्ममे निर्मलचित्तवृत्तिः।
महेशबिम्बं महनीयकीर्तिं मृत्सांभिरुत्सारितहस्तयुग्मः ॥

पत्रं पुष्पमहो लिङ्गे यद्यत्सर्वं समर्पितम्।
तत्तत्सर्वं तदादृश्यत्किरातशिरसि स्थितम ॥

---

1. 'नाशयास्पदम्' घ.

अस्तोकपुष्पाञ्जलिमादधान-
स्तस्थौ किरीटी विवशान्तरात्मा ॥ ५४ ॥

भूयः शिवाङ्घ्रियुगभक्तिपवित्रितेन
पार्थः समेन मनसा सुचिरं विभाव्य ।
उन्मीलयन् नयनतामरसे किरात-
मन्यादृशत्वमुपयान्तमिवालुलोके* ॥ ५५ ॥

गङ्गाकल्लोलमाला भुजगवरजटामालिका चन्द्रलेखा
श्रीमद्भूषाकपालावलिमणिमकुटं चन्द्रसूर्याग्निनेत्रम् ।
क्ष्वेळग्रैवेय[1]भूषा परशुमृगक[2]पालं पिनाकं कराग्रे
[3]वक्षोभागेऽस्थिमाला लसदजिनदुकूलं महानूपुरा[4]हिः ॥ ५६ ॥

‡साक्षाच्छ्रीपार्वतीयं सहविजयजया षण्मुखो भद्रकाळी
शास्ता नन्दी च भृङ्गी गणपतिर्ऋषभः सिंहकुम्भोदराद्याः ।

---

* इतः परं खपाठे ६१ तमपद्यान्तभागस्थाने एवं दृश्यते–

अहो चित्रं वर्णः श्रयति सितिमानं शशिकला
जटाजूटे फाले नयनमधिकण्ठं मलिनिमा ।
विभूषा भोगीन्द्रा भसितमनुलेपः सुमधुरः
किरातो नैवायं शिवशिव स एवैष भगवान् ॥

शबरी च ततः स्वयं भवानी ददृशे भूरिकृपातरङ्गिताक्षी ।
अपरे शबर.......षदां क्षणाद् बभूवुः ॥

‡ पद्यमिदं घपाठे ५८ तमपद्यानन्तरं दृश्यते । 'नमोऽस्तु' इति एकं पद्यं (पुटं १७) गपाठवत् च ।

---

1. 'शोभा' ग, 'शोभं' ब. 2. 'कपालिं' घ.
3. 'वक्षोनागास्थिमाला' ग. 4. 'राहिं' घ.

इन्द्राद्या लोकपालाः सकल[1]सुरगणाः सिद्धगन्धर्वमुख्याः
साध्या विद्याधरेन्द्राः [2]सकलवसुगणा नारदाद्या मुनीन्द्राः* ॥५७॥

आश्चर्यं महदाश्चर्यमहो सर्वं ममाग्रतः ।
दृश्यते शाम्भवं तेजः सर्वलोकैककारणम् ॥ ५८ ॥

नमस्ते सकलाध्यक्ष ! नमस्ते भक्तवत्सल ! ।
नमस्ते [3]सर्वभूतेश ! नमस्ते वृषभध्वज ! ॥ ५९ ॥

प्रसीद मे पर्वतराजकन्ये !
प्रसीद मे शङ्करजीवनाथे ! ।
प्रसीद मे देवमुनीन्द्रवन्द्ये !
प्रसीद मे देवि दयाम्बुराशे !§ ॥ ६० ॥

---

* इतः परं (५८-६३) श्लोकषट्कस्थाने गपाठे एवं श्लोकद्वयं दृश्यते-

नमोऽस्तु नारायणवल्लभ प्रभो नमोऽस्तु नारीललितार्धदेह ।
नमोऽस्तु तस्मै हर चन्द्रमौले नमोऽस्तु तुभ्यं शरणागतोऽस्मि ॥

स्वामिन् मया जळधिया त्वयि देवदेव वाचा शरेण धनुषा दृढमुष्टिना च ।
यत्ते चतुर्विधमकारि रणे तदागः क्षन्तव्यमद्य भवता करुणार्णवेन ॥

§ इतः परं घपाठे ६१-६३ तमपद्यस्थाने ' स्वामिम् मया ' इति गपाठपद्यं, ततः ' इति विज्ञापयन्तमेनं पारिजातपल्लवतल्लजपरिमृदुलस्य पाणितलस्य परामर्शनेन प्रमुषितव्रणवेदनाङ्गं प्लवङ्गकेतुमनङ्गशासनोऽप्येवमवादीत् ।

यथा तुरीयेण युधि प्रवीर तवापराधेन भवामि हृष्टः ।
तथा न भक्त्या तपसां विभूत्या तरुप्रसूनार्चनया महत्या ॥

इति दृश्यते ।

---

१. ' मुनिगणाः ' ख. ग.        २. ' दितिसुतपतयो नारदा ' ख. ग.
३. ' पार्वतीकान्त ' ख.

*कृतो मया यदज्ञानात् विमर्दोऽयं त्वया सह ।
शरणं संप्रपन्नोऽस्मि तत् क्षमस्वाद्य शङ्कर![¶] ॥ ६१ ॥

करुणामृततुन्दिलैः कटाक्षैः
शमिताशेषपरिश्रमः पुरारेः ।
उदतिष्ठदुदूढभक्तिभार-
प्रसरद्बाष्पसमुत्थितः किरीटी ॥ ६२ ॥

भो भो फल्गुन! तुष्टोऽस्मि कर्मणाप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ६३ ॥

इत्युक्त्वा प्रणतं प्रगृह्य भगवानाश्लिष्य पार्थं मुहु-
र्दत्त्वा तूणकृपाणकार्मुकशरान् तस्मै प्रसादोन्मुखः ।
भीष्मद्रो[1]णमुखान् कुरून् न तु परं जेतुं त्रिलोकीमपि
प्रीतः पाशुपतं समन्त्रमुपदिश्यास्त्रं तिरोभूद् गणैः ॥ ६४ ॥

इति किरातप्रबन्धः समाप्तः ।

---

* खपाठे इदं पद्यं ६२ तमपद्यानन्तरं वर्तते ।

¶ इतः परं खपाठे ६२–६३ तमपद्यस्थाने—

अथ पाशुपतं महास्त्रमुख्यं प्रवणाय प्रणयेन पाण्डवाय ।
सरहस्यमुपादिशत् स तस्मै जगतां पालयिता जगद्धिताय ॥
किरातरुद्रः समरे सव्यसाचिमदं क्षणात् ।
अपास्य तस्मै यः स्वास्त्रं ददौ सोऽव्यादुमापतिः ॥

इति दृश्यते ।

---

1. 'ण कृपादिकान् न तु' ख. ग. घ.

# APPENDIX-A.

[*Additional passages and variants found in Ms. No. T. 489 B*]

In place of verses 1—4:

तत्राथ ते सत्यवतीसुतस्य पादारविन्दात् प्रविसृत्वरीभिः ।
नखप्रभाभिर्नवपुष्पपङ्क्तिं जटालतानां जनयाम्बभूवुः ॥

अत्यादरेण परिगृह्य कृतां सपर्यां
वर्यां युधिष्ठिरमुखैः स महामुनीन्द्रः ।
तुष्टो जगाद वचनं वरतुष्टिहेतो-
र्यस्येहितं ज(ग?य)ति भूतदयापयोधेः ॥

जेतुं भीष्मपुरस्सरान् युधि रिपूनाराधनीयो हरः
सद्यः शक्रसुतेन क्लृप्ततपसा मन्त्रो मया दीयते ।
इत्युक्त्वा च तथोपदिश्य स मुनिस्तस्मै समामन्त्र्य तं
राजानं प्रययौ पराशरसुतो वैहायसेनाध्वना ॥

तदनु जयवियोगविधुरोऽपि विजयवियोगसाध्यरिपुविजयसमुन्मुखीकृतचेता रजनिकरकुलतिलकभूतो धर्मजातः समाहूय सर्वाङ्गीणविनयभूषापरिष्कृताङ्गं शक्रात्मजमित्युवाच–

वत्स! त्वयैव महतः परिपन्थिकृच्छ्रा-
दुद्धारणीय इति निश्चितमानसोऽस्मि ।

तद्गच्छ पाशुपतमाशु गृहाण शस्त्रं
तुष्टात्मनः पशुपतेर्विमलैस्तपोभिः ॥

इत्यग्रजस्य वचनं वचनीयहीनं
श्रुत्वार्जुनः शुभमना महनीयकीर्तिः ।
मङ्गल्यमाल्यमिव तच्छिरसा दधानः
प्रालेयशैलमधिगन्तुमनाः प्रतस्थे ॥

पशुपतिमभिराद्धुं प्रस्थितं पाण्डुपुत्रं
निजपतिमवगम्य प्रेमभारानताङ्गी ।
कुवलयदळनीलैरस्य लोलैरपाङ्गै-
रकुरुत च निचोळं शीतभूमिं यियासोः ॥

तदनु पुरन्दरनन्दनः पुरारिचरणपरिचरणपरायणो मुरारिकरुणाशरणस्तदीयचरणारविन्दमधुकरायमानमानसश्चण्डतरकोदण्डमण्डितभुजदण्डः पण्डिताग्रसरो दिग्विजयसञ्चारावगतसञ्चरः समतीतवननदनदीपर्वतः पार्वतीगुरुमचलेश्वरमचलहृदयः समारुरोह । तत्र च परिसरनिपतितवियन्नदीविमलजलपरिशोभितपार्श्वे निखिलतरुवरनिकरनीरन्ध्रततटे विष्कारभीतविद्रावितदुष्टसत्त्वे सत्त्वराशिरयम् ईश्वरेश्वरमुपासाञ्चक्रे ।

In place of verses 6—10:

फलपर्णजलानिलाशनानि प्रविहाय क्रमतस्तपस्यतोऽस्य ।
विषयेषु न लोलतां प्रपेदे विजयस्याक्षगुणः कराग्र एव ॥

*तस्याथ नारदमुखात् तपसः प्रभावं
श्रुत्वा हरस्त्रिजगतामधिपो दयालुः ।

---

* *This verse is also found in Ms. marked* च. *See foot-note page 2.*

देव्या तया सदसि सूचिततद्दिदृक्षु-
र्दित्सन्नभीष्टमपि लुब्धकतामयासीत् ॥

देवी देवं सोमचूडं निकामप्रेमा सोमा प्राप्तकैरातवेषम् ।
[1]प्रेक्षं प्रेक्षं तत्सदृक्षं तदानीमूरीचक्रे चारु रूपं शबर्याः ॥

In place of verse 12 to the end of the succeeding prose passage (P. 4. L. 5):

परिस्फुरत्पल्लवपाटलांशुका प्रकोष्ठडोळायितकाचकङ्कणा ।
उरोजयोः कुञ्जरकुम्भतुल्ययोर्युगेन गुञ्जाफलदाम बिभ्रती ॥

उदारवन्यप्रसवावचूडिनी समानवेषैः सहिता सखीजनैः ।
नितम्बभारालसमन्थरैः पदैरनुप्रयाति स्म गिरीशमम्बिका ॥

ततश्च तौ रजतगिरिशिखरान्निर्गच्छन्तौ किमेतदिति सांशयिकैरपि तदनुसरणोचितवेषरचनाकुलैः प्रमथकुलैः परिवार्यमाणौ समुच्चलितलाङ्गूलमितस्ततो धावद्भिर्दूरचारश्रमविदारितवदनलम्बमानरसनाग्रनिपातिनीभिः सृणिकाकणिकाभिर्वनपद्धतिं शुद्धतरीकुर्वद्भिर्द्रुततरश्वसितकम्पमानावयवैस्तेषु तेषु वनकुञ्जेषु श्वापदानन्विष्यान्विष्य हुङ्कारं रचयद्भिः विश्वनिगमविश्वकद्रुभिरविमुच्यमानपार्श्वभागौ दीपकमृगायमाणनिजहरिणशावकानुधाव्यमानपार्ष्णिभागौ प्रशमिततुहिनजाडिमोद्वेगेन भाविनि पदे पदे वनदेवताभिरवकीर्यमाणसुरतरुप्रसवास्तरणेन हिमवतः कटकपथेन सविलासं सञ्चरमाणौ कावेतावदृष्टपूर्वौ वन-

---

1. *Shorter version reads* प्रेक्ष्य प्रेक्ष्यं *See Page 3. Verse 11.*

मस्माकमाक्रमत इति रोषकषायिततया निवारयितुकामैरपि तेजोविशेष-प्रतिहतोत्साहैरन्यैः शबरयुवभिः केवलमवलोक्यमानौ जटावल्लरीमूल-पल्लवमुकुळीभवदञ्जलिभिस्तपस्विपुञ्जैर्नभसि विमानवेगं निरुध्य हर्षाश्रुभिः सममभिवृष्यमाणजयशब्दौ जगदादिमौ दम्पती सनियममुपासीनस्य शुनासीरसुतस्य तपोवनं प्रति प्रतस्थाते ।

In place of the prose passage after verse 13:—

तत्र च अत इतो गजयूथपतिविलुलितकमलिनीपरिमलः इतः करिकळभभज्यमानसल्लकीकषायगन्धः इतो वनमहिषविषाणाभिद्यमानवल्मीकधूळिः इतो मृगकदम्बकम् इतो वराहयूथम् इतः शिखण्डिविरुतम् अयमुन्मदगन्धगजगण्डकण्डूयनपरिमळालीनमुखमधुकरस्तरुः एषा हि प्रत्यग्रस्रुतमृगीगर्भरुधिरलोहिनी भूमिः चमरपङ्क्तिरियमनुगम्यतामुच्छुष्कमृगकरीषपांसुला त्वरितमध्यास्यतामियं वनस्थली तरुशिखरमारुह्यताम् आलोक्यतां दिगियम् आकर्ण्यतामयं शब्दो गृह्यतां धनुः अवहितैः स्थीयतां मुच्यन्तां श्वानः इत्यन्योन्यमभिवदतो मृगयाप्रसक्तस्य किरातसमूहस्य संक्षोभितकाननः कोऽपि कोलाहलोऽभूत्¶ ।

Verses 14 and 15 are not found. Additional verse found between verses 16 and 17:—

*तं वीक्ष्य रौद्रवपुषं मृगशावकेषु
त्रासाद्विशत्सु कुटिलम्बितवल्कभागान् ।
पर्याकुले कलकलैरपि पक्षिजाले
पार्थो निवृत्य नियमाज्जगृहे शरासम् ॥

---

¶ *This passage is found with some variations in the shorter version, See Page 4 - 5.*

* *This verse is also found in Ms.* च. *See footnote. Page 5.*

अथापतन्तं धृतसूकराकृतिं
खुराहतग्रावविनिर्यदर्चिषम् ।
स घोरघोणादलितान्तिकद्रुमं
जिघांसुमालोकत मूकदानवम् ॥

Between verse 18 and the first half of verse 19 :

इति निश्चित्य सत्वरमेव सत्त्वराशिर्दुष्टसत्त्वनिबर्हणाय वाम-
चरणजानुविन्यस्तदक्षिणचरणमाधिधरणि निधाय स्वांसभागसम्भावित-
सज्जकार्मुकमादाय तूणीरमुखोदञ्चितवरविशिखसनाथितहस्तो लघुहस्तः
शक्रसुतश्चक्रीकृतधनुः शक्रारिमेनं संप्रहर्तुमुपाक्रमत । ततस्तदानीमेव
कुण्डलितकार्मुकश्चण्डीव मृगानुसारी चण्डतरः कश्चन वनेचरः समा-
लक्ष्यत ।

उग्रम्पश्यश्मश्रुपूर्णोरुवक्त्रः पिञ्छानद्धक्रूरकेशः स्थवीयान् ।
चापं चेलं कृष्णमाबिभ्रदङ्गे तूणीबाणैरञ्चिते रोषपूर्णः ॥

मा मुञ्च बाणं मदनुद्रुतेऽस्मिन्नपेहि जाल्मेति किरातनेतुः ।
वचः स लक्ष्यं मनसो न कुर्वन् वराहमत्रस्य चकार लक्ष्यम् ॥

शिलीमुखाभ्यां शिवसव्यसाचिनोः
समुज्झिताभ्यां युगपत् किटेस्ततः ।
समं विभज्यायुरभुज्यत क्षणात्
सहोदराभ्यामिव पैतृकं धनम् ॥

भूदारे निहते तस्मिन्नुदारशररंहसा ।

Additional passage found after verse 26 :

ततः कुपितोऽपि कुरुप्रवीरस्तपःशान्ततया नातिपरुषमेवमवादीत् ।

Additional portion found between verses 27 and 28 :

इति मुनेरन्तर्दर्परसपरीवाहवेणीवाणीमाकर्ण्य क्षोणीधरधन्वापि सस्मितं प्रत्यभाणीत् ।

दयापरस्य त्वयि मे शरो महा-
नपातयिष्यत् प्रथमं न चेदमुम् ।
तवैष बाणं प्रतिहत्य धीणया
तपोधन! त्वां न्यहानिष्यदुद्धतः ॥

Between verses 33 and 35 :

मृदुबुद्धिरङ्ग वचसैव लक्ष्यसे
मृगहिंसनं विपिनसीम्नि(मा)दृशाम् ।
शतशः स्वधर्म इति पद्यते बुधैः
शबरस्य वा वद तपोधनस्य वा ॥

संदृश्यते तव तपः खलु शुद्धमेतद्
यज्जन्तुहिंसनविधौ दृढबद्धवाञ्छम् ।
आस्तामिदं भुजबलश्च मृगात्ययेऽस्मिन्
साहाय्यकं यदुपजीवति मे शरस्य ॥

ईदृशीं वचनरीतिमपास्य-
श्रेहि सान्त्वय क्रियानासि मे त्वम् ।
अक्षिण किञ्चिदरुणिम्नि जगत्या-
मन्तकोऽपि मदतीव बिभीयात् ॥

इति शङ्करस्य न्यक्कारवादेन सातङ्कः कुरुशशाङ्कः पुनरपि गिरं कामप्यङ्कूरयामास ।

यस्माद्वनेचरकुलाधम जल्पसि त्व-
मेवं पुनः पुळकयन् स्वजनस्य दर्पः ।
तस्मादसंशयमुपान्तजुषः किरात्या-
स्ताटङ्कमेव सहसे न कपोलमित्रम् ॥

Between verses 35 and 37 :

वनेचर! त्वं गिरिकन्दरास्पदो
न वेत्सि पुंसो भुवि बाहुशालिनः ।
विकत्थनं त्वां पुरतो मृगीदृशां
नयामि बाणैरिह पोत्रिणो गतिम् ॥

तादृग् वचः श्रवणदाहि मुनेर्निशम्य
सर्वे गणाः सह रुषा विजिघांसवोऽपि ।
देव्या विलोक्य वदनं स्मितगर्भगण्डं
तूणार्धकृष्टविशिखेन करेण तस्थुः ॥

अथ भिल्लमल्लकुरुवल्लभावुभौ
परिफुल्लमल्लकुलशल्यपल्लवैः ।
स्थगितावलोकसरणिं दिवौकसां
समरं भयङ्करजवं वितेनतुः ॥

Between verses 37 and 41 :

यद्यदस्त्रमथ शक्रनन्दनः
शत्रवे प्रहरति स्म निर्दयम् ।
तत्तदाशु तरसाशुगैरदा-
दाशुशुक्षणिविलोचनस्तदा ॥

*नागास्त्रं वपुषो विभूषणमभूदाग्नेयमत्युज्ज्वलं
निर्वाणं सुरसिन्धुपाथसि पुनर्जिष्णोरभूदीशितुः ।
भूषाजातभुजङ्गमैः कबळितं वायव्यमस्त्रं पुन-
र्दिग्धं यत्तु विषेण तत्खलु शशी सद्यः सिषेचामृतैः ॥

सरुषीव हरे विकृष्टचापे
सशरं शैलसुतापि जातशङ्का ।
मघवत्सुतमङ्गलाय देवी
मनसा 'या त इषु'श्रुतिं जजाप ॥

ससम्भ्रमाकृष्टधनुर्गुणोऽपि
शम्भुः कृपाम्भोनिधिरिन्द्रसूनौ ।
सम्बद्धमात्रान् कतिचिच्च देहे
चक्रे परार्धान् कतिचिच्च बाणान् ॥

$ततः क्रुध्यत्यस्मिन् [2] निशितनिशितैः सायकगणै-
र्विदीर्णाङ्गं दृष्ट्वा निजपतिमसावाकुलमनाः ।
व्रजेयुः पुष्पत्वं सपदि विशिखाः साहसकृत-
स्तवेत्येवं शापं व्यसृजदिह तस्मै गिरिसुता ॥

---

* *This verse is found also in Ms.* घ. *See foot note, Page 12.*

$ *This verse is found also in the shorter version. See page 1 Verse 40.*

---

1. *Ms.* घ *reads underlined portions* 'ददावत्यन्तहृष्टोऽर्जुनः' 'जाल', *and* 'सिक्तं'.

2. *Shorter version reads underlined portion.* 'प्रहरति शितै

Between verses 42 and 50 :

‡उपरोद्धुमपारयन् प्रभावं
    महनीयं विजयस्य मर्त्यवृत्त्या ।
उररीकुरुते पुरा किरातो
    निजमैश्वरमप्रमेयमोजः ॥

[1]प्रवरध्वनिपूरितान्तरिक्षं
    प्रहरन्तौ स्म पिनाकगाण्डिवाभ्याम् ।
शबरेन्द्रसुरेन्द्रनन्दनौ तौ
    चिरमायोधनकेळिमादधाते ॥

प्रहितं वदने कराळघोणे
    कठिनेन स्थूलहनौ पृथासुतेन ।
द्विजराजनिभं शरासनं तत्-
    प्रणिपत्स्ये सहसैव लुब्धकेन ॥

स गाण्डिवदण्डोऽपि खाण्डवे तक्षकवधूवधसाधनतया चिरमस्मत्कुलविरोधीति क्रोधनैस्तस्य जटावनकुटुम्बिभिः कुण्डलिभिर्भक्षित इव तत्क्षणान्नालक्ष्यत ।

हरप्रभावेण हृते च कार्मुके
    रजोविमृष्टक्षतजार्द्रपाणिना ।

‡ *These three verses are also found in Ms.* ग. *See page 11 foot-note for the first two and page 13 foot-note for the last one*

1. *Ms.* ख *reads underlined portions* ' प्रसरद्ध्वनि ', पुरन्दरात्मजौ ', ' कठिनस्थूल ', ' प्रणिपत्सौ ' *and* ' लुब्धकेन्द्रः '

सुदृढमपि च कर्षन् सोऽयमालोकि लोकैः
पतितमपि च लक्ष्यं लक्षितं तत्क्षणेन ॥ ११६ ॥

*पाञ्चाली तु तथाविधां मधुरतामुत्प्रेक्ष्य विप्रेऽपि तां
लक्षच्छेदमसौ करिष्यति न वेत्यत्याकुला तस्थुषी ।
चापं गृह्णति विस्मयाकुलमना लक्षेऽपि लूने पुनः
सर्वाङ्गोत्पुळका क्षणार्धमशकत् स्थातुं न सा व्रीळया ॥११७॥

वरयितुमथ कान्तं प्रेर्यमाणा सखीभिः
सपदि सहजया सा लज्जया रुध्यमाना ।
न खलु तमुपयातुं स्थातुमप्यानताङ्गी
क्षणमियमतिलोला पारयामास बाला¶ ॥ ११८ ॥

यातायातं मुहुरपि हृदा तन्वती सा कथञ्चिद्
बाला मालाविलसितकरा प्राप्य तं वीरमौलिम् ।
अंसे तस्य प्रकृतिसुभगे मालिकामर्पयित्वा
प्रस्विन्नाङ्गी नमितवदना तस्थुषी तत्र रङ्गे$ ॥ ११९ ॥

---

* ख ग ङ पाठेषु श्लोकोऽयं नास्ति ।

¶ इतः परं खङपाठयोः—
'मालया कलितामोदपरिभ्रान्तालिमालया ।
रमणी रमणं चक्रे रमणीयाङ्गमर्जुनम् ॥ इति,
ङपाठे पाञ्चालीस्वयंवरप्रबन्धः समाप्तः ॥' इति,
खपाठे च 'एतावता पाञ्चालीस्वयंवरप्रबन्धोऽवसितः' ॥ इति च वर्तते ।

$ इतः परं गपाठे 'उच्चैरुच्चार्य०' (श्लो० १२०) इति वर्तते ।

---

1. ' स्वयमपि च वि क ' ख.

*कैळीनाळीकसञ्छादितनमितमुखं किञ्चिदाघूर्णमक्ष्यं
सद्यःस्विद्यल्ललाटं नवपुलकचयैरुल्लसद्गण्डमूलम् ।
पादाङ्गुष्ठेन मन्दं किसलयमृदुना भूतलं व्यालिखन्त्या-
स्तस्या रेजे तदेतत् स्थितमतिसुभगं व्रीळया पेलवाङ्ग्याः£ ॥

उच्चैरुच्चार्यमाणे क्षितिसुरनिवहैः साधुवादे तदानी-
मन्तःसन्तोषपूर्णे द्रुपदनरपतौ पौरसार्थे कृतार्थे ।
हा धाष्टर्यं ब्रह्मबन्धोरनृपतिरिह कः कन्यकारत्नमर्हे-
दित्यक्षुभ्यन्नसूयादुरभिभवचलन्मानसा मानवेन्द्राः¶ ॥ १२१ ॥

यदि सममनयाहं निर्गमिष्यामि तूष्णीं
ध्रुवमिह विहसेयुर्भीरुरित्येव भूपाः ।
इति कृतमतिरुच्चैः शान्तगम्भीरनादां
सकलजनसमक्षं वाचमूचे किरीटी ॥ १२२ ॥

दत्तैवेयं खलु नृपतिना छिन्नलक्षाय कन्या
विद्ध्वा लक्ष्यं तदहमधुना राजपुत्रीं नयामि ।
भूपेष्वेको यदि न सहते न्याय्यवृत्तिं ममैतां
सद्यः सन्नह्यतु भुजबलव्यक्तये मृत्यवे वा ॥ १२३ ॥

---

* गपाठे श्लोकोऽयं नास्ति ।

£ घपाठे एतावता पूर्वभागः समाप्तः ।

¶ इतः परं गपाठे श्लोकद्वयं नास्ति ।

---

१. 'समीहेतेत्यक्षु' ग. घ.　　२. 'मतिचलन्मा' क.

३. 'भूयस्तद' घ.

लक्ष्यच्छेदस्तव जळमते काकतालीय एष
स्फायद्गर्वैः पुनरपि च किं जल्पसि स्वल्पसारम् ।
क्षोणीन्द्राणां सदसि मिषतां नेष्यसे चेत् त्वमेनां
छेत्स्यामस्ते झटिति वरणस्रग्विणीं कण्ठनालीम् ॥ १२४ ॥

इति ब्रुवन्तः सर्वेऽपि रोषपोषारुणेक्षणाः ।
तूर्णमुत्थाय युद्धाय सन्नह्यन्ति स्म ते नृपाः ॥ १२५ ॥

*अस्मज्जातिर्जळैवेत्यभिमतमनसो वीक्ष्य कर्माद्भुतं नः
प्रौढासूयाः क्रमन्ते द्विजतरुणममुं निःसहायं निरोद्धुम् ।
ब्राह्मेण ज्योतिषामून् वयमिह तरसा भस्मयामः स्मयान्धा-
नित्थं पृथ्वीसुरेन्द्राः कतिचिदथ जवादुत्थिता बद्धरोषाः ॥

वस्त्राण्याबध्य मध्ये तदनु निजवृसीरायुधीकृत्य घोरं
तर्जन्या तर्जयन्तो नृपकुलमभितो दद्भिरोष्ठं दशन्तः ।
रक्षामन्त्रं जपन्तः सुनिभृतमभयाद् दर्शितोग्राभिमानाः
संचेलुर्भूमिपालान् प्रति धरणिसुरा हासयन्तो जनौघान् ॥

पार्थोऽपि सस्मितमुखो विनिवार्य [1]विप्रां-
स्तानेव रक्षितुमयुङ्क्त नृपालपुत्रीम् ।
विप्रैश्च कैश्चन तदा पवनात्मजन्मा
साहाय्यके सपदि तस्य नियोजितोऽभूत् ॥ १२८ ॥

---

* गपाठे श्लोकोऽयं नास्ति ।

---

1. ' सर्वांस्तामेव ' ग.

दृष्ट्वा भीमोऽपि पार्थं विरथमथ समुद्वीक्षमाणः समन्तात्
पश्यन् दूरे महान्तं कुरुनृपतिरथं तूर्णमुत्प्लुत्य तस्मिन् ।
हत्वा चैनं चपेटार्पणसमपसरद्राक्षिलोकं क्षणेन
व्युद्भ्रान्ते भूपसङ्घे मिषति सति ददौ सादरं सोदराय ॥१२९॥

अद्धा युद्धाय लक्ष्यत्रुटनपटुममुं चापदण्डं प्रगृह्य-
न्नारादारुह्य तस्थौ रणभुवि बलभिन्नन्दनः स्यन्दनं तम् ।
भीमोऽपि क्रूरकर्मा चिरसमयसमाकाङ्क्षितं साम्परायं
प्राप्य प्रीतान्तरात्मा स्वयमनुजकृतं सूतकृत्यं वितेने* ॥१३०॥

$तत्क्षणमुत्क्षुभितानां दुःक्षितिपानां कुलानि तान्यरुधत् ।
आयतसायकवर्षैरारुद्धककुम्भि हयवन्ति ॥ १३१ ॥

रे रे सम्प्रति तिष्ठ तिष्ठ कुमते क्वासि[1] प्रयाणोद्यतः
सन्नद्धो भव मङ्क्षु भुङ्क्ष्व च फलं धाष्टर्यस्य ते साम्प्रतम् ।
इत्युक्त्वा परिवार्य तं नृपतयो रुद्धाशमद्धा शरैः
शैलं वारिभिरम्बुदा इव जवादक्षोभ्यमभ्याकिरन् ॥ १३२ ॥

अथ भीमो भीमबलः
क्रोधादादाय सिंहरसितानि ।
हेषाभीषितविश्वा-
नश्वान् वेगेन चोदयामास ॥ १३३ ॥

---

* इतः परं गपाठे नव श्लोकाः (१३१–१३९) न सन्ति

$ घपाठे श्लोकोऽयं नास्ति ।

---

१. ' त्वं क्व प्रया ' घ.

आकर्णाकृष्टचापः समरभुवि तदा सोऽयमच्छिन्नरूपां
वर्षन् नाराचधारां प्रतिभटपृतनामण्डले चण्डवेगाम् ।
ईषद्रक्तान्तनेत्राञ्चलचलनकलासूचितक्रोधवेगः
सद्यो विद्वेषिवीरान् प्रति महितमहःसञ्चयः संचचाल ॥१३४॥

तस्य शिलीमुखपक्षी
जवभरझङ्कारि[1]चारुपक्षपुटः ।
हस्तिकुलमस्तकान्ते
विनिपत्य पपौ मदोदयं निखिलम् ॥ १३५ ॥

न परं वेषमात्रेण सर्वे ते सव्यसाचिनम्[2] ।
किन्तु शौर्योष्मणाप्येनं बाडवं मेनिरे नृपाः ॥ १३६ ॥

पार्थेषुभिन्नकरिमस्तकनिर्गतानि
मुक्ताफलानि घनशोणितरूषितानि ।
युद्धाङ्कणे शुशुभिरे परितः सरन्त-
स्तस्य प्रतापदहनादिव विस्फुलिङ्गाः ॥ १३७ ॥

खण्डितदण्डानि तदा
श्वेतच्छत्राणि धरणिपतितानि ।
तुलयन्ति स्म समन्ताद्
वरशरवर्षोत्थितं शिलीन्ध्रकुलम् ॥ १३८ ॥

वर्षति विजयपयोदे शैल्यवतीः[3] सपदि निबिडशरधाराः ।
क्षणमपि शिथिलितपक्षः स्थातुं न शशाक राजहंसगणः ॥ १३९ ॥

---

1. 'ङ्कारचारु' घ.  2. 'नः' घ.
3. 'वतीर्निबिडशर' घ.

केचित्सञ्छिन्नचापाः कतिचन विरथाः केऽपि निर्लूनकण्ठाः
केचित् त्रुट्यात्किरीटाः कतिचिदपि तथा मङ्क्षु संक्षुण्णगात्राः ।
युद्धे कृत्तातपत्राः कतिचन निहतप्रायसैन्यास्तथान्ये
किं भूयोभिर्वचोभिः सकलनृपतयो विद्रुताः क्षुद्रशौर्याः ॥ १४० ॥

दृष्ट्वा तत्र पलायमानमखिलं क्षोणीपतीनां कुलं
सैन्यं विद्रुतशेषमेव सकलं सन्नह्य जन्याङ्कणे ।
अभ्यायात् स्वरथापहारजनितक्रोधासहात्मा समं
राधेयेन समस्तकार्मुकवतां वर्येण दुर्योधनः ॥ १४१ ॥

रे रे महीसुरकुलाधम! तिष्ठ तिष्ठ
क्व प्रस्थितोऽसि परिमुष्य नृपालपुत्रीम् ।
अद्यैव कर्णशरदर्शितया पदव्या
सद्यः प्रयास्यसि कृतान्तपुरीं दुरात्मन् ॥ १४२ ॥

*पृथ्वीन्द्राः पृथुविक्रमा द्विजवधे संस्मृत्य यत् पातकं
त्वामुत्सृज्य गतास्तदद्य मनुषे स्वीयं भुजावैभवम् ।
मद्बाहुस्तु पुनर्जिघांसुनिधने निष्पातकत्वं विद-
न्निच्छित्वा जितकाशिनस्तव शिरो नैवाद्य विश्राम्यति ॥१४३॥

इत्थमाकर्ण्य कर्णस्य भाषितं गर्वरूषितम् ।
अम्भोधिरवगम्भीरां वाचमूचे धनञ्जयः ॥ १४४ ॥

---

* गपाठे श्लोकोऽयं नास्ति ।

---

१. 'केऽपि' ग. घ.    २. 'अम्भोदरव' ग.

रे राधेय! विकत्थनैरलमलं गीर्वैभवं वेद्मि ते
तद्दोर्वैभवमस्ति चेत् प्रकटय प्रत्येहि युद्धाङ्कणम् ।
यो लक्षेऽपि च तादृशे क्षितिभृतां लक्षेऽपि दृष्टोदयो
नो सुप्तं न मृतं च संप्रति पुनस्तेनैत्र मद्बाहुना* ॥ १४५ ॥

इति कटुतरवादक्षोभितः साभिमानं
निजधनुरभिकर्षत्झङ्कराट् सङ्करान्ते ।
अपरिमितमुदीर्णैर्घोरनाराचपूरैः
स्थगिततनुमकार्षीद्विक्रमी शक्रसूनुम् ॥ १४६ ॥

ते चारुपक्षा निःसीमा निर्गताः शलभा इव ।
धनञ्जयमुपागम्य तरसा नेशुराशुगाः ॥ १४७ ॥

कर्णेन पार्थाय विकृष्य मुक्ता
अपार्थपाता विशिखा बभूवुः ।

* इतः परं गपाठे द्वौ श्लोकौ न स्तः । गघपाठयोः—

किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम! ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ॥

मत्प्रशंसेन किं कर्ण! धनुर्वेदो न चास्म्यहम् ।
नापि रामो न देवेशः ब्राह्मणोऽहमरिंदम! ॥

इति पद्यद्वयमधिकं दृश्यते ।

१. 'जन्याङ्कणम्' ग. २. 'च' ग. घ.

पार्थेन चाकर्णविकृष्टमुक्ताः
कर्णे निपेतुः सुदृढं शरौघाः ॥ १४८ ॥

किं किमेष बत सायकोत्करः पार्थमुक्त इव मां प्रबाधते ।
इत्यसौ रविसुतो विलोकयन् जिष्णुमेव तमबोधि भूसुरम्* ॥१४९॥

तदनु च सोऽधिकरोष-
प्रज्वलितो वज्रिसूनुमभिनिपतन् ।
उल्बणतद्बाणगणा-
नसहिष्णुर्भूय एव विमुखोऽभूत् ॥ १५० ॥

कृतो जिष्णुशरैः कर्णः सफलैरफलोद्यमः ।
सपत्रैस्तैश्च निष्पत्रा कृता तस्य वरूथिनी ॥ १५१ ॥

सुयोधनस्यापि तदा[1] शरीरं
विदारयन्ति स्म किरीटिबाणाः ।
हा कर्ण! कर्णेति विलापशाली
यथा स कर्णस्य रुजं वितेने† ॥ १५२ ॥

किं गिरा विजयबाणनिर्गलत्-
कङ्कटान्तपरिवान्त[2]शोणितौ ।

---

* इतः परं गपाठे श्लोकद्वयं नास्ति ।

† एतदनन्तरं गपाठे 'स्त्रीरत्नलाभ०' इत्यादिना नालायनीचरितप्रबन्धः प्रस्तूयते ।

---

१, 'तथा' बपाठः २. 'पात' बपाठः

अङ्गराजकुरुराजपुङ्गवौ
सङ्गराजिरतलात् पलायितौ* ॥ १५३ ॥

इत्थं जित्वा नृपौघान् निजभुजमहसा शक्रसूनुस्तदानीं
साकं भीमेन तुष्टैर्धरणिसुरवरैर्विस्मितैस्तैः कृताशीः ।
वीरो भूपालपुत्रीं रणभुवि जयलक्ष्मीमिवादाय मूर्तां
तस्माद् रङ्गात् प्रतस्थे प्रमुदितहृदयः कुम्भकाराधिवासम् ॥१५४॥

इति पाञ्चालीस्वयंवरम् ॥

---

* एतदनन्तरं घपाठे 'स्नीरत्नलाभ०' इत्यादिना नालायनीचरितप्रबन्धः प्रस्तूयते ।

॥ श्री ॥

# नाळायनीचरितप्रबन्धः

[श्रीनारायणभट्टविरचितः ।]

स्त्रीरत्नलाभमुदितौ युवरत्नलाभ-
प्रीतां प्रगृह्य कमनीं कुरुवंशवीरौ ।
कौलालमालयमुपेत्य पुरैव तत्र
प्राप्तैर्यमात्मजयमैर्मिळिताबभूताम् ॥ १ ॥

अम्बां गृहोदरगतां बहिरागतास्ते
भिक्षेयमस्त्युपहृतेति सलीलमूचुः ।
सा भुज्यतां सह भवद्भिरिति ब्रुवाणा
कुन्ती निरेत्य च निरीक्ष्य विलज्जिताभूत् ॥ २ ॥

*तदो अ पमदाउळमौळिमाणिदाए ताए सह तत्थ[1] एव्व खणं उपविसन्तेसु [2]तेसु णिरुवमरूवभावळावण्णपरिमळधारितारिसतरुणी-रअणदंसणजणिअपंचाउहविआरं अप्पणो विअ कणिट्ठाणं [3]वि देक्खिअ जणणीए एव्व मुहकमळं पुणोवि विळोअअन्तो धम्मसुदो सव्वहा

* गद्यपाठयोर्गद्यमिदं नास्ति ।

१. 'तत्त' च.    २. 'तेसु तारिस' ख.
३. 'वि दिट्ठिन्तं मुहकमळं मुहिं एव्व विळो' क. ख.

॥ श्री ॥

# नाळायनीचरितप्रबन्धः

[ श्रीनारायणभट्टविरचितः । ]

श्रीरत्नलाभमुदितौ युवरत्नलाभ-
प्रीतां प्रगृह्य कमनीं कुरुवंशवीरौ ।
कौलालमालयमुपेत्य पुरैव तत्र
प्राप्तैर्यमात्मजयमैर्मिळिताबभूताम् ॥ १ ॥

अम्बां गृहोदरगतां बहिरागतास्ते
भिक्षेयमस्त्युपहृतेति सलीलमूचुः ।
सा भुज्यतां सह भवद्भिरिति ब्रुवाणा
कुन्ती निरेत्य च निरीक्ष्य विलज्जिताभूत् ॥ २ ॥

*तदोअ पमदाउळमौळिमाणिदाए ताए सह [1]तत्थ एव्व खणं उपविसन्तेसु [2]तेसु णिरुवमरूवभावळावण्णपरिमळधारितारिसतरुणीरअणदंसणजणिअपंचाउहविआरं अप्पणो विअ कणिट्ठाणं [3]वि देक्खिअ जणणीए एव्व मुहकमळं पुणोवि विळोअअन्तो धम्मसुदो सव्वहा

---

* गद्यपाठयोर्गद्यमिदं नास्ति ।

---

१. 'तत्त' च. २. 'तेसु तारिस' ख.
३. 'वि दिट्ठिन्तं मुहकमळं मुहिं एव्व विळो' क. ख.

माआ सच्चवाआ एव्व भविस्सदित्ति णिअमाणसविस्संभेण संभावअन्तो णिअवअणे दोसं आसंकिअ परिपुच्छन्तिं कुंतिभोअतणअं कुसळं एव्व[1] भअवं साहइस्सदित्ति समास्सासिदवन्तो ।

(छाया) ततश्च प्रमदाकुलमौलिमानितया तया सह तत्रैव क्षणमुपविशत्सु तेषु निरुपमरूपभावलावण्यपरिमळधारितादृशतरुणीरत्नदर्शनजनितपञ्चायुधविकारमात्मन इव कनिष्ठानामपि दृष्ट्वा जनन्या एव मुखकमलं पुनरपि विलोकयन् धर्मसुतः सर्वथा माता सत्यवागेव भविष्यतीति निजमानसविस्रम्भेण सम्भावयन् निजवचने दोषमाशङ्क्य परिपृच्छन्तीं कुन्तिभोजतनयां कुशलमेव भगवान् साधयिष्यतीति समाश्वासितवान् ।

तावत् स वत्सलतया तरळान्तरात्मा
पद्मेक्षणः सह बलेन कुलालगेहम् ।
गूढं प्रविश्य वचनैरमृतायमानै-
राश्वास्य पाण्डुजनुषः स्वपुरीं[2] प्रतस्थे ॥ ३ ॥

ततश्च तज्जातिजिज्ञासया निगूढमनुगम्य कुलालनिलयप्रचारितचारे तदविदूर[3]निविष्टे धृष्टद्युम्ने तेषु च सायमुपहृतभिक्षेषु जननीनियुक्तपरिहर्षुलपार्षतीप्रथमपरिवेषणविशेषसरसमन्नमुपर्युज्य[4] मुदितेषु विजनमिति सांयुगीनशस्त्रास्त्रादिविषयाः कथाः कथयत्सु शयितेषु चारजनकथिततत्कथानुमितक्षत्रभावपरितुष्टधृष्टद्युम्ननिवेद्यमानेन परेद्यवि[5] द्रुपदेन प्रहिते पुरोहिते सरथे च पुरुषे[6] रथाधिरूढेषु तेषु जननीजनीसहितेषु

---

1. ‘ एव्व मे पडिभासइत्ति आसासेइ । तावत्० (श्लो० ३) क. ख.
2. ‘ स पुरीं ’ घ.
3. ‘ दूरं निवि ’ ग.
4. ‘ भुज्य ’ च.
5. ‘ द्युरपि द्रुप ’ क.
6. ‘ षे तथा रथा ’ क. च.

धीर[1]मधुराकृतिदर्शनमात्रकृतार्थीकृतपौरजनेषु पुरं प्रविष्टेषु परिमृष्टाशनपरितुष्टेषु चिरदृष्टशस्त्रादिदर्शनपरिहृष्टेषु सुखनिविष्टेषु परिपृष्टः सादरं द्रुपदेन धर्मात्मजः स्वयं निर्माय्यमवादीत् ।

पञ्चापि पाण्डुतनया वयमेव राजन्!
मातां पृथेयमिह लक्षभिदर्जुनोऽयम् ।
प्राग् धार्तराष्ट्रकृतजातुषगेहमुक्ताः
षण्मासमात्रमचराम निगूढवेषाः ॥ ४ ॥

इति निजमनोरथपरिपूर्तिनिशमनवशाद् दुरुत्तरानन्दाम्बुधिपात[2]-निरुत्तरे क्षण[3]मिव तस्थुषि द्रुपदे पुरैव मत्प्रियकरणकल्पितजामातृभावो लक्षविक्षपणलक्षितभुजवीर्यो [4]वल्गूयन्नयं फल्गुनः स्वयमुद्वहतु सद्यो मत्प्रियसुतामित्यभिदधाने सति धर्म[5]पुत्रः स[6]त्रपमिव किमपि प्रत्यभाषत।

राज[7]न्! युक्तमिदं विरुद्धमिव मे किञ्चिद्वचः श्रूयतां
मात्रा नः सह भुज्यतामियमिति व्याख्यायि सत्योद्यया ।
अस्माकं च मतिः कदध्वविमुखी सम्प्रत्यमूं काङ्क्षते
तज्ज्येष्ठक्रमतो विवोढुमुचिता स्त्रीरत्नमेषा समम् ॥ ५ ॥

इति निशम्य धर्मसूनुः किमेवं वदतीति शङ्का[8]विष्टे सधृष्टद्युम्ने द्रु[9]पदे यौवनसुलभो दिव्यरूपदर्पितो मार एव किं धीरमप्यमुमेवं

---

१. 'धीरमधुराकृतिमात्र' क. ख, 'धीरतराकृतिमात्र' ङ. च.
२. 'पातितनि' ङ, 'पतितनि' च. ३. 'णं तस्थु' ङ.
४. 'वल्गयन्नयं' ङ. च. ५. 'धर्मसुतः' क.
६. 'त्रपं किम' ङ. च. ७. 'जन्नुक्त' ङ. च.
८. 'विष्टे सति धृष्ट' ङ. च. ९. 'पदे च यौ' ङ. च.

प्रलापयतीति मनसि चिन्तयत्स्वन्येषु [1]तत्र स्वयं निगमपारेचरः पारा-[2]शर्यो मुनिः प्रादुरासीत् ।

तं [3]च प्रज्वलन्तं महान्धकारे प्रदीपमिव सस्ने[4]हालोकिनमालोक्य प्रसन्नेषु सकलेषु समर्हणान्ते द्रुपदपरिपृष्टः स मुनिरनुरहसमेनं [5]कथयाञ्चक्रे ।

किं शङ्क्यते पञ्चपतित्वहेतुं
प्राग्जन्मवृत्तं कथयाम्यमुष्याः ।
प्रागिन्द्रसेनेति जगत्प्रतीता
नाळाय[6]नी काचन कन्यकाभूत् ॥ ६ ॥

सा च सुन्दरितमा तपःसिद्धिपौष्कल्यवता मौद्गल्यमुनिना पाणीकृता तेन च पातिव्रत्यबलविलोकनाय गृहीतां दशमिदद्रुण-कच्छुरक[7]कुद्रदद्रुर्गन्धिमाकृति[8]र्मनूपतीयमाना ऋतीयमाना परिचरन्ती चिरेण चामुना सतीव्र[9]ततीव्रतया कृपायमाणेन कुरूपं विहाय [10]स्वरूपमेव भजता वरं वृणीष्वेत्यभिहिता चिरनिरुद्धसुखरसातितृ[11]ष्णया पञ्चधा-भूते न भवताहमिह जन्मनि परजन्मन्यपि रमयितव्येति[12] वरयाञ्चक्रे

ततश्च तदैव पञ्चायुधनिभां पञ्चेन्द्रियप्रीणनीं पञ्चगात्रीं दधता

---

१. 'ततः स्व' क. २. 'शरो' ख. ग. घ.
३. 'च ज्व' च. ४. 'हावलो' ग. च.
५. 'कथापया' क. ख. ६. 'णी' क. ङ.
७. 'कच्छरदुर्गन्धामा' ङ. च. ८. 'मनूतीयमानापि ऋतीयमाना परि' क. ख. ग. घ.
९. 'व्रतया कृपा' क. १०. 'सुरूप' ग. घ. ११. 'तृष्णा पञ्च' ग.
१२. 'ति वरं वरया' ङ. च.

दयितेन सम[1]मविरतं रतोत्सवमनुबोभुवती वनान्तरेष्वपि मुनिजन-
माननामधिगम्य रंरम्यमाणा सुधाशनलोकमप्याक्रम्य मघोनी-
मानिता मानुषीजनुषि दुर्लभान् वल्लभैः सह दिव्यभोगाननुभवन्ती
पर्वतायिते मुनौ निम्नगायिता पादपायिते लतायितेति सर्वजाति-
सुखानि निर्विशन्ती बहुस[2]मीमेवं स्मर[3]साम्राज्यं बुभुजे ॥

तथानुभू[4]यापि सा सुखानामपरितृप्ता[5] परितृप्तमनसि [6]मोक्षमाणे
मौद्गल्यमुनौ भाविजन्मन्यपि पञ्चधा रतिमर्थितो वञ्चयसि किमिदानी-
मिति सरोषमिवँ[7] तं निरुरोध ।

क्षत्रभावमवलम्ब्य रुन्धती
क्षत्रियैव भवितासि कामिनि! ।
तत्र पञ्च रमणाश्च सन्त्विति
प्रत्युदीर्य गतवान् महामुनिः ॥ ७ ॥

सापि शापो वा वरो वायमिति सन्दिहाना वन्धकीत्वभिया
प्रियपञ्चानमात्मानमनिच्छन्ती पुनरेकपतिनैव भोगसमृद्धिसिद्धये
मुग्धेन्दुशेखरमतिघोरया तपस्यया नमस्ययोपास्यया च वरिवस्यन्ती
ततः प्रसेदुषि प्रादुर्बभूवुषि तस्मिन् परजन्मनि परमानुभवाय मे पतिं
देहीत्यसकृज्जगाद सम्भ्रमवशाद्वा दैववशाद्वा वाणीम् ।

देवोऽप्युवाच मुनिवाक्यमलङ्घ्यमार्ये!
यन्मां बलात् त्वमपि याचसि पञ्चकृत्वः ।

---

१. ' मनवरतं ' क. ख. ङ. च.
२. ' सममेवं ' ङ. च.
३. ' सायुज्यं ' ख.
४. ' भूतानमपि सुखा ' ङ, ' भूतानामपि सा सुखा ' च.
५. ' प्ता मनसि ' ङ च.
६. ' मोक्ष्यमाणे ' ग.
७. ' व तरुणी रुरोध ' ङ. च.
८. ' रं तप ' ङ. च.

मत्सेवनेन पुनरेष विशेषलाभः
पञ्चेन्द्रतुल्यपतयो न च दूषणं ते ॥ ८ ॥

एवं चेत् कन्यकैवाहं सर्वैः प्रथमसङ्गमे ।
भूयासमिति भूयोऽसौ वरं वव्रे महेश्वरात् ॥ ९ ॥

विदग्धया सोऽथ वृतो महेशो भोगाविरोधेन परां च सिद्धिम् ।
रतिश्च सिद्धिश्च मिथो विरुद्धे तथाप्युपायो भवितेत्यवादीत् ॥१०॥

ततश्चेन्द्रतुल्यपञ्चप[1]तित्वे[2]प्रतिज्ञानिरूढिं निरूपयन् विरूपाक्षो मदवधीरणदोषेण पुरातनकल्पेषु निराकृतस्वरश्चतुरस्तुरासाहः समागतानुग्रहकालानद्य धरायामवतारयिष्यामि । पञ्चमः[3] पुनरद्यतनः[4] सुत्रामा तत्र नियोक्तव्यः । स च किमपि[5] व्युत्पादितदर्पोन्नतिरेव सुप्रीत्या म[6]त्प्रोक्तकारी भविष्यतीत्यदः कुर्वन्निन्द्रसेने! त्वं मन्दाकिनीमेत्य वृन्दारकेन्द्रमालोक्य समानयेति[7] तां समादिक्षत् ।

सा[8] प्राप्य गङ्गामनिरीक्ष्य शक्रं
बाष्पायमाणा क्षणमास्त तोये ।
प्राप्तश्च तद्बाष्पजहेमपद्म-
विस्मेरगीर्वाणगिरा सुरेन्द्रः ॥ ११ ॥

का त्वं कुतस्त्या वद पङ्कजाक्षि[9]
त्वं पङ्कजाश्रुश्च किमेतदार्ये! ।

---

१. 'पतिप्रतिज्ञा' ख. ग.
२. 'तानिरू' ङ. च.
३. 'मस्तत्र नूतनः सुत्रा' च.
४. 'रद्य नूतनः सुत्रा' ङ.
५. 'मप्युत्पादित' क. ङ. ख.
६. 'मत्प्रियोक्त' ग.
७. 'ति समा' ग.
८. 'सम्प्राप्य' ङ. च.
९. 'जाक्षी' ङ. च.

इतीरिता सा कथयामि सर्वं
मनागुपेहीति निनाय शक्रम् ॥ १२ ॥

ततश्च विलासग्राहिण्यास्तस्या रूपरत्नदर्शनादेव विवशीभूते कळवचनमन्त्रैश्च समाकृष्यमाणे समागच्छत्यहल्याभुजङ्गे गङ्गाधरोऽपि[1] तुहिनगिरिशृङ्गे भृङ्गारिवेषमालम्ब्य कपटललनावेषया दाक्षायण्या सहा[2]क्षान् दीव्यन् मध्ये[3]मार्गम[4]ध्यास्ते स्म ।

शक्रोऽथ सक्रोधमवोचदेनं
जगत्पतेर्मे जळ! याहि मार्गात् ।
इतीरितः सस्मितमैक्षतेशो
जम्भार्दनः स्तम्भितमूर्तिरासीत् ॥ १३ ॥

स्थाणोः कटाक्षमात्रेण स्थाणुसारूप्यमागतः ।
तस्थौ गळितदम्भोळिः सम्भ्रमी जम्भभेदनः ॥ १४ ॥

तत[5]ः समाप्तदेवनः स[6] देवः स्वरूपमातिष्ठन् कोपिष्ठचेताः पापिष्ठमेनं नेदिष्ठमान[7]येत्यादिष्टया[8] नाळायन्या[9] परामृष्टमात्रे धरापृष्ठनिपतनकलुषितसां[10]स्राक्षं सहस्राक्षं रोष[11]ज्वालेन फालेक्षणेन धक्ष्यन्निवोद्वीक्ष्य रूक्षतरमाचचक्षे—

रे रे जगत्पतिम्मन्य! दिवस्पतिहतक! मत्परिभवनिष्पातितस्वर्ग-

---

१. 'पि स्म तुहिन' क. ङ. च.
२. 'सह दीव्यन्' ङ. च.
३. 'वर्त्ममध्या' ख. ग. ङ. च.
४. 'ध्यास्ते । शक्रो०' क. ङ. च.
५. 'तश्च समा' क. ङ. च.
६. 'स स्वरू' च.
७. 'नयेति समादिष्टया' ङ. च.
८. 'या तया ना' क.
९. 'ण्या' ङ. च.
१०. 'सहस्राक्षं सह' ङ. च.
११. 'रोषोज्ज्वलेन' क.

पद्चतुर्वा[1]सर्वीवासभूतामिहत्यां गुहा[2]मुद्घाट्य तां प्रविश्य तदनुभवमनुभवेति ।

सोऽपि कन्दरामिमां भयस्खलितेन करे[3]णोद्घाट्य तदन्तरन्धतमसे निज[4]तुल्यभासश्चतुरो विषण्णान् निषण्णानालोक्य साध्वसविवशः प्रविश प्रविशेति भूतगणनोदनारब्धक्रन्दनः संक्रन्दनो बहुशः प्रणम्य दीनमूचे कालरुद्रम्—

अजानतो हा बत विश्वनाथ !
क्षमस्व दासस्य ममापराधम् ।
नाहं कृतान्तो न पुरो न कामः
क्रो[5]धस्य यन्मां विदधासि लक्ष्यम् ॥ १५ ॥

इति वदति गतमदेऽस्मिन् प्रशान्तरोषः कृतान्तभेदी सहासमवादीत्—

पञ्चापि सार्धमवतीर्य महीममुष्याः
कामं प्रपूर्य पुनरेष्यथ दिव्यलोकम् ।
धर्मानिलाश्विन इमान् जनयन्तु पूर्वान्
जन्योऽस्त्वयन्तु जनकोऽपि नवीनशक्रः ॥ १६ ॥

इति निशम्य हर्षायमाणैर्गुहोत्थितैस्तैरपि समं तथेति प्रणेमुषि बलद्विषि मत्कोपपरामृष्टा यौ[6]ष्माकी लक्ष्मीरपि नाळायन्या[7] सहैकीभूता

---

१. 'सववास' ङ. च.
२. 'मुत्पाट्य' क.
३. 'णोत्पाट्य' क.
४. 'तुल्याभास' क.
५. 'कोपस्य' ङ. च.
६. 'ष्माकलक्ष्मी' ङ. च.
७. 'न्या' ङ. च.

प्रमोदयिष्यति युष्मानित्यभिदधति न्यक्षे तत्क्षणानुप्रविष्टशक्रलक्ष्मी- शतगुणप्रदीप्तामिमां समीक्ष्य विस्मितेषु सकलेषु भुवमवतीर्य भूभार- हरणेन बहु सुरकार्यं करिष्यतां भवतामवलम्बनार्थं नाळायनीनाथित- परगतिसिद्ध्यर्थं च नारायणो भगवानप्युपासितव्य इति नरनारायणा- श्रममनुपगमय्य ततस्तिरोदधे पुरां भेत्ता ।

तत्र च तैरिन्द्रसेनासहितैरिन्द्रैरिन्द्रियैरिव षड्भिरेकोन्मुखैरुपा- सितः स्वयं नारायणो नातिचिरेण प्रसेदिवानूचिवान् ।

नराख्यमंशं मम विश्वभूत्यै
स्वांशेन सार्धं जनयेन्मरुत्वान् ।
अहं द्विधाभूय च वः सुहृत् स्यां
नाळायनी चास्तु मदेकभक्ता ॥ १७ ॥

इति नरांशं सुरेश्वरे निवेश्य शिरोरुहद्वयं च निजं सितासित- वर्णं पराक्षिप्य दयाकुलाक्षं निरीक्षमाणस्तिरोदधे स पुराणपुरुषः ।

केशौ केशवसीरिणावभवतां तौ पाण्डवप्रीतये
चत्वारोऽप्यभवन् पुराणहरयो धर्मात्मजाद्या इमे ।
शक्रांशः स नरांश एष विजयः सा शक्रलक्ष्मीर्वृता
पुण्यश्रीभिरयोनिजा हरिपरा नाळायनी द्रौपदी ॥ १८ ॥

---

१. 'वनमव' क. २. 'णी' ङ. च.
३. 'वानुपासि' ग. ४. 'नारायणा' ङ च
५. 'पुराणां भेत्ता' ग. ६. 'ततश्च तै' क.
७. 'तैरिन्द्रि' च. ८. 'यणी' ङ. च.
९. 'धे पुरा' ख. १०. 'युता' ग. ख.
११. 'णी' ङ.

इत्थं हरानुग्रहवेदवाक्या-
दियं वधूः पञ्चवरोपलभ्या ।
[1]कथाकवि मामथ शङ्कसे चेद्
ददामि दिव्यं तव भूप! चक्षुः ॥ १९ ॥

इतीरिते सोऽथ निरीक्ष्य पुत्रीं
ना[2]ळायनीमिव रमासमेताम् ।
महारुचस्ता[3]नपि पञ्च शक्रान्
मुनेः पपात द्रुपदः पदान्ते ॥ २० ॥

*तदो अ महीवइसम्मदिमुहेण सम्मुदिएसु सअळेसु मणोरहं-कुरभंगसंकाणिवुत्तिकिदत्थीकिदेसु वहूवरेसु अज्ज एव्व रोहिणीअं उव्वा[4]हमंगळं ति बादराअणोवदेसेण समुग्घोसि[5]ओसवकोळाहळे पुरवरे [6]भोजणस्सन्तपअस्सन्तघणाअन्तभूसुरउळणिरन्तरेसु घरन्तरेसु करे हिअए अ णिबद्धकोदुएसु भूसणविसेसभूसिएसु विविहविदरणमुदिअ-भूसुरवरविहिदासिव्वअणेसु पञ्चाळराएण साअरं उव्वाहगेहं उवणिअ रअणासणणिवेसिएसु कुरुउळवीरेसु कुसळवहूअणपरिभूसिआ वि णिअ-भासा भूसणाइं एव्व भूसअन्ती मन्दं मन्दं उपगमिअ पिअपञ्चअ-समीवणिसण्णा जण्णसेणी सैरपञ्चअसबिहणिहिअ व्व कुसुमचावको-

---

* गद्यपाठयोर्गद्यमिदं नास्ति ।

---

१. ' कथामपीमां मम शङ्क ' ङ. च.
२. ' यणी ' ङ. च.
३. ' नथ पञ्च ' क.
४. ' वाळलम्म ' क. ख.
५. ' सिऊसव ' क. ख. ङ.
६. ' भोजस्सन्त ' क. ख.
७. ' वरपञ्च ' ख.
८. ' कुभंड ' ख.

अंडळदा उदुपञ्चअपरिमिळिदव्व कुसुमज्जाणसिरी भावप्पमाणपञ्च-ओदञ्चिअव्व अप्पविआरविज्जा पाणपञ्चअपरीदव्व चेदणा अहिअदरं राजेइ ।

छाया— [ ततश्च महीपतिसम्मतिमुखेन सम्मुदितेषु सकलेषु मनोरथाङ्कुरभङ्गशङ्कानिवृत्तिकृतार्थीकृतेषु वधूवरेषु अद्यैव रोहिण्यामुद्वाहमङ्गळमिति बादरायणोपदेशेन समुद्घोषितोत्सवकोलाहले पुरवरे भोजनस्वत्पयस्य[1]द्धनाथद्भूसुरकुलनिरन्तरेषु गृहान्तरेषु करे हृदये च निबद्धकौतुकेषु भूषणविशेषभूषितेषु विविधवितरणमुदितभूसुरवरविहिताशीर्वचनेषु पाञ्चालराजेन सादरमुद्वाहगेहमुपनीय रत्नासननिवेशितेषु कुरुकुलवीरेषु कुशलवधूजनपरिभूषितापि निजभासा भूषणान्येव भूषयन्ती मन्दं मन्दमुपगम्य प्रियपञ्चकसमीपनिषण्णा याज्ञसेनी शरपञ्चकसविधनिहितेव कुसुमचापकोदण्डलता ऋतुपञ्चकपरिमिळितेव कुसुमोद्यानश्रीः भावप्रमाणपञ्चकोदञ्चितेवात्मविचारविद्या प्राणपञ्चकपरीतेव चेतना अधिकतरमराजत् ।

ततश्च कृष्णद्वैपायने कृष्णवर्त्मनि च साक्षिणि धौम्यकृतहोमकर्मा धार्मिकोत्तमो धर्मसुतः स्वयमयाथाकथाचहस्त्यवित्तसञ्चयसौवस्तिकीकृतसमस्तबाडव्यां मङ्गलक्रियामुपाक्रमत ।

करं ग्रहीष्यन्नखिलं धरण्यां[2]
शुभे दिने प्रक्रमकाङ्क्षयेव ।
नरेन्द्रपुत्र्या नवरत्न[3]दीप्तं
करं नरेन्द्रो जगृहे तदानीम् ॥ २१ ॥

---

१. ' द्धनस्वद् ' घ. च.
२. ' ण्याः ' घ.
३. ' नखरत्न ' घ.

कृशानुमध्ये जुहुवाम्बभूव
किन्नाम सा लाजमिषात् कृशाङ्गी ।
यशःकणान् वा धृतराष्ट्रजानां
स्मयश्रियो वा रिपुसुन्दरीणाम् ॥ २२ ॥

ततः सभार्यो नृपतिः कृशानु-
प्रदक्षिणीकारविधिच्छलेन ।
उपेक्षया खिन्नमुदेष्यमाणं
प्रसादयामास नु शौर्यवह्निम् ॥ २३ ॥

न जातु गृह्णाम्यपरस्य पाद-
मितीव शंसन् परिसङ्ख्ययासौ ।
अश्माक्रमाय द्रुपदात्मजाया
जग्राह पादौ किल धर्मसूनुः ॥ २४ ॥

कर्तुं ध्रुवं शत्रुनितम्बिनीनां
सीमन्तशोणाश्मविहारयोग्यम् ।
अश्मानमाक्रामदभीक्ष्णमस्याः
करेण पत्युश्चरणौ[1] गृहीतः ॥ २५ ॥

इत्थं चतुर्भिः कुरुराजपुत्रै-
रग्राहि घर्मोदकशीकरार्द्रैः ।
समुच्छ्वसत्पुष्करचारुरस्याः
करः करिण्या इव यूथनाथैः ॥ २६ ॥

---

१. ' भर्तुश्च ' घ.

[1]निर्वृत्तनीराजनमङ्गलेभ्यो
   नृपो ददौ यौतकमर्थराशिम् ।
शतं रथानां करिणां सहस्रं
   तुरङ्गमाणामयुतं च तेभ्यः ॥ २७ ॥

तदा द्विजानां व्रजतां [2]खेरेषु
   स्वस्त्युक्तिभिः स्वर्णभरैश्च कण्ठे ।
यथेष्टभुक्त्या जठरे च जातः
   सादप्रकर्षो विदधे प्रसादम् ॥ २८ ॥

कृष्णां विवाह्य स च कृष्णमुनिः प्रतस्थे
   कृष्णाज्ञया च नगरीं विविशुस्तदानीम् ।
[3]शय्याम्बरायुधविभूषणवाहनाद्याः
   कुन्तीभुवां परिकरास्त्रिजगद्दुरापाः ॥ २९ ॥

ततश्च—

त्रपानतवि[5]लोकनैरभिनवानुरागाङ्कुरै-
   रदत्तकळभाषितैस्सभयकौतुकव्याकुलैः ।
अमानुषगुणोन्न[6]तेर्द्रुपदकन्यकायास्तदा
   नवीनसुरतोत्सवैर्मुमुदिरे नरेन्द्रात्मजाः ॥ ३० ॥

---

१. ‘ निर्वृत्त ’ ग. ङ. च.
२. ‘ मुखेषु ’ ङ. च.
३. ‘ शय्यावरायुध ’ ङ. च.
४. ‘ पा: ॥ त्रपा:० ’ ङ.
५. ‘ विलोचनै ’ क. ग. घ.
६. ‘ तैर्द्रु ’ ग. घ.

पाञ्चालराजतनयां
पञ्चभिरुद्वाहयन् कुरुप्रवरैः ।
वेदसमवाक्यगुम्फो
वेदव्यासः पुनातु वो भगवान्* ॥ ३१ ॥

( इति नाळायनीचरितप्रबन्धः । )

---

* 'एतदनन्तरं क. ख. घ. ङ. पाठेषु 'पूर्वं विप्र॰' इत्यादिना युधि
भिषेकप्रबन्ध आरम्यते । चपाठे तु पाञ्चालीस्वयंवरस्योत्तरभागः समाप्त
दृश्यते ।

# युधिष्ठिराभिषेकप्रबन्धः

श्रीनारायणभट्टप्रणीतः ।

पूर्वं विप्रविनिर्जिताः किल गताः श्रुत्वाथ तान् पाण्डवा-
नात्तामर्षममून् निहन्तुमनसो वार्ष्णेय[1]योगात् पुरः[2] ।
ते सर्पा इव कर्णदर्शनजुषो गान्धारमन्त्रेरिताः
कौरव्याः कुटिलाः समेत्य रुरुधुः पाञ्चालभूभृत्पुरीम् ॥ १ ॥

तत्र चाकाण्डे कर्णजयद्रथसौबलसुयोधनप्रधानवीरवर[3]प्रेरितकौरवब[4]लसमाक्रान्तपुरजनाक्रन्दना[5]कर्णनामर्षसमभिद्रु[6]तधृष्टद्युम्नशिखण्डिप्रमुखवीराश्रितपाञ्चालपृतना[7]संप्रवृत्तसंप्रहारक्रमविवृद्धकोलाहलाकर्णनादन्तरवस्थातुमसहिष्णुषूढरथे[8]षूढकोदण्डेषु पाण्डववीरेषु नासीराग्रमापतितेषु—

राधेयगान्धारसुतोग्रदंष्ट्रं
सुयोधनोदग्रविषेण घोरम् ।
अतर्जयत् कार्मुकमर्जुनस्य
विस्फारमन्त्रैः कुरुसैन्यनागम् ॥ २ ॥

ततश्च[9] पश्चाप्यमी तुल्यदारग्रहणजनितकुरुकलङ्का बध्यन्तां बध्यन्तामित्यभिपत्य घोरा[10]हवकारिषु तत इतः पतद्वृकोदरदवानल-

---

१. 'यगेहात् पु' ख.
२. 'पुरा' ग. घ.
३. 'प्रेषित' ग. घ.
४. 'बलाक्रान्त' ग. घ.
५. 'नामर्ष' ग. घ.
६. 'द्रुतद्रुपदधृष्ट' ग. घ.
७. 'संवृत्तप्रहा' ग. घ.
८. 'षु रूढरथेषूढ' क. ख.
९. 'ततः पश्चाप्यमी कुरुकुलकलङ्का' ख. ग. घ.
१०. 'रारवकारि' घ.

हेतिनिवारणासमर्थेषु ससिन्धुराजेष्वपि कुरुवीरेषु संमुखापतितस साचिसायकपातसंमूर्च्छिते सूतापवाहिते सूतसूनौ प्रस्थानदुःशकुनयो ऽयमिति दुष्टशकुनिसमाश्वास्यमानान् पर्याकुलान् दुर्योधनादीनम्ये फल्गुनेषुमिव कर्णभेदिनीं वाचमूचे भीमसेनः—

यूयं कस्मादकस्मादिह समुपगताः सूतसूनोः श्रमार्थं
नेतुं वा तं शरासं विजयकरसमाकृष्टिभिः क्लिष्टसारम् ।
कन्यासूर्भूमिरेषेत्यपरमिह वधूरत्नमन्वेषितुं वा
सौभ्रात्रादीक्षितुं वा कपटजतुकुटीभस्मपिण्डानिमान् नः ॥३॥

इत्युदीर्य सपत्राचिकीर्षौ निष्पत्रीकृतसाले काल इव दण्ड समाद्रवत्यमुष्मिन् हाहारवैस्तस्य सिंहारवमनुकुर्वती निवृत्तेऽप्यरि भीममयीरिव दिशः पश्यन्ती पर्यधावत दुर्योधनसेना ।

पराजिताः कर्णपुरोगमास्ते
पुरोचनं वर्त्मनि गर्हयन्तः ।
रथैर्ययुः खण्डितकेतुदण्डैः
पुरं विलक्षाः कुरुराजपुत्राः ॥ ४ ॥

जयश्रियं प्राप्य वधूं द्वितीयां
कृतोत्सवोद्घोषमुपागतांस्तान् ।
पतीन् प्रहर्षेण ददर्श कृष्णा
न वेत्ति सा मुग्धवधूः किलेर्ष्याम् ॥ ५ ॥

---

१. 'निवाश्वा' ग. घ. २. 'शिष्ट' क.
३. 'ती पर्य' ख. ग. घ. ४. 'वेद' ग. घ.

इत्थं मानपरे किल
रुन्धति सबले कुरूद्वहे याते ।
अनुरुन्धन् पुनरागात्
सम्मानपरो यदूद्वहः सबलः ॥ ६ ॥

तं माधवं पुरवधूजनधैर्यचोरं
तापिञ्छगुच्छरुचिमाश्रितजालमार्गा ।
पत्युः सखेति भुवनातिशयीति कृष्णा
कारुण्यसिन्धुरिति कौतुकिनी ददर्श ॥ ७ ॥

तत्रोच्चरोच्चरमहोत्सवमोदमानैः
पाञ्चालपाण्डुतनयैरभिपूज्यमानः ।
रामान्वितोऽरमत फल्गुनवल्गुवद्ध-
क्रीडाविनोदनतनूनि दिनानि शौरिः ॥ ८ ॥

प्रीताशयोऽथ विदुरो धृतराष्ट्रमूचे
दिष्ट्यास्मदन्वयमगात् खलु याज्ञसेनी ।
किं किं सुयोधनभृतेति वदन्तमेनं
पाण्डोः सुतैरधिगतेति पुनर्न्यगादीत् ॥ ९ ॥

ततश्च दिष्ट्या न नष्टाः कृतार्थाश्च पार्था इति सावहित्थविकत्थिनि धृतराष्ट्रे निःसहचेताः कर्णसहायो दुर्योधनो रहसि तं स्वपितरमेवं प्रावोचत् ।

---

१. 'किल' ग. घ. २. 'तत् किं' ग, 'तं किं' घ.
३. 'तार्थाश्च इति' ग. घ. ४. 'यो दुर्नयनिधिर्दुर्यो' क. ग.

अ[1]यि प्रियसुयोधन तात ! निरुद्योगिनामस्माकं द्विवारं प[
दायिषु[2] सद्यः समुच्छेद्येषु सहजरिपुषु तेषु किं सं[3]परितोषं ब्रूषे । विं
रेषु विधातव्यमित्यभिधीयताम्– तत्रैव चारैर्विषप्रदानं वा, द्रु
धनप्रदानादेषां नि[4]र्वासनं वा, तत्रैव निवासनं वा, द्रुपदपुत्रैर्बलम
तिभेदनं वा, तुल्यवल्लभानामेषां मिथो वैरकरणं वा, पाञ्चाल्य
मन्त्रौषधैस्तेभ्यो विभेदनं वा, हृद्याङ्गनाभिरन्याभिरमून्[5] वि
तस्या विरोधनं वा, प्रबलतरवृकोदरच्छलवधेन दुर्बलानामेषां [
करणं वा, पुरमानीय पुरेव गरादिप्रयोगो वेति ।

परीक्षितप्रष्टममीषु तादृशं
पराक्रमणैव तु ते वधोचिताः ।
तदर्थिना पक्षबलं नृपेन्दुना
प्रव[6]र्ध्यतामित्यवदद् रवेः सुतः ॥ १० ॥

धृतराष्ट्र[7]स्त्ववादीत्—

राधेय वीर ! ननु युक्तमिदं वचस्ते
मा कुप्य निष्परिकरेष्वपि तेषु भग्नः ।
सोऽयं पराक्रमरसः फलिता कदेति
भीष्मादिभिः सह ममास्ति विचिन्तनीयम् ॥ ११ ॥

इति समाहूतैः शान्तनवद्रोणविदुरैः[8] सामदण्डभेदैरिवो[9][
पार्श्वकायः[10]शूलिकयोः दुर्योधनकर्णयोर्दुर्नयदुर्यशसोरिव प्रस

---

१. ' अयि अप्रिय ' क. २. ' षु तेषु किं ' ख. ग. घ.
३. ' संपरि ' ग. घ. ४. ' सनं तत्रैव ' ग. घ.
५. ' रमून् ' ग. घ. ६. ' वध्यतां ' क. घ.
७. ' ष्ट्रः– राधेय ! ' ग. घ. ८. ' विदुरकृपैः साम ' ग. घ.
९. ' मदानभेददण्डैरि ' ग. घ. १०. ' पगतैः ' ग. घ.

रुन्धद्भिः षड्गुणानिव पाञ्चालीपाण्डवा[1]नुपगृह्य मानयितुं[2] बहुधा प्रतिपा[3]द्यमानः प्रज्ञाचक्षुः स्वयं प्रीतचेता नीतिविदुरं विदुरमेव द्रुपदपुरं[4] प्रजिघाय ।

येषामयं शाश्वतिको विरोध-
स्तेषां मिथो द्वन्द्वसमुत्सुकानाम् ।
द्रागेकवद्भावमसौ[5] विधास्य-
न्धो नृपः शाब्दिकवद् बभासे ॥ १२ ॥

प्राप्तोऽथ तत्र विदुरः सहसा पुरस्ताद्
गोविन्ददर्शनवशादवशीकृतात्मा ।
तैर्जातुषालयकृतोपकृतिं विचिन्त्य
बाष्पायितैर्द्रुतमवन्द्यत पाण्डवेयैः ॥ १३ ॥

तत्र च[6] ते विदुरकथितप्रज्ञाचक्षुर्विज्ञापनश्रवणाद् यज्ञसेनादिभिः सह संमन्त्र्य मुकुन्दशासनं प्रमाणयन्तः सकुन्तीपार्षतीकाः पार्षतानुगताः श्वशुरदत्तबहुमां[7]त्रहास्तिकपादाताश्वीयरथकड्यपरिपीड्यमानक्षितिचक्राश्चक्रधरहलधराभ्यां सह [8]वक्रवचनपरिहासरसपरिलङ्घितमार्गाः कुतूहलमत्तपुरजनं हस्ति[9]नपुरमभिप्रविष्टाः परिहृष्टान् धृतराष्ट्रभीष्मादीनभिप्रणेमुः ।

कुरुमातरमेत्य पार्षती
सह कुन्त्या प्रणनाम सौबलीम् ।

---

१. ' वाननुपगृह्य ' ग. घ. २. ' मानितुं ' क. ख.
३. ' पद्य ' ग. घ. ४. ' पुरं प्रति प्रजि ' ख. ग. घ.
५. ' वामहो द्र ' घ ६. ' च विदु ' ग. घ.
७. ' मत्तहा ' ग. घ. ८. ' वचःपरिहास ' ख. ग. घ.
९. ' नपत्तनम ' ख. ग. घ.

सुभगे! कुरुवंशवर्धिनी
भवितासीत्यवदन्मुदैव सा ॥ १४ ॥

पाण्डुरूप्यमुदवाप्य गृहं ते
शौरिसीरिविदुरादिपरीताः ।
गूहिताशयसुयोधनकर्ण-
प्रीणिताः सदयिताः सुखमूषुः ॥ १५ ॥

ततो धर्मसूनुममुं प्रकृतिवृद्धिहेतुं गुणशालिनं शुद्धाकारं कौ॰ पदस्यार्धे निवेशयितुकामस्तद्धितवेदी पौरजानपदादीनपि वृद्धा॰ पानयन् धृतराष्ट्रो जतुगेहजतापनिर्वापणार्थमिवाभिषेकक्रियां प्रारभ

गाङ्गेयकुम्भेष्वथ गाङ्गमम्भः
प्रजाप्रमोदेन सहोपनीतम् ।
व्यासोऽपि दैवाद् ददृशे शरीरी
पूरोः कुलस्येव स भाग्यपूरः ॥ १६ ॥

जित्वा धरित्रीमखिलां क्षितीशान्
कृत्वा वशे दिव्यमर्घस्त्वमिष्ट्वा ।
सुखेन जीवेति तमभ्यषिञ्चन्
कानीनधौम्यप्रमुखा मुनीन्द्राः ॥ १७ ॥

गाङ्गतोयपरिषेकतस्तदा
पाण्डुरेव ददृशे स पाण्डवः ।

---

१. 'न्मुदेव' ख. २. 'रूपमु' घ.
३. 'गेहजाततापं' ग. घ. ४. 'आरभत' ग. घ.
५. 'प्रज्ञाप्रमो' ग. घ. ६. 'शान् क्षिती' क.

किञ्च साधु धृतराष्ट्रमप्यमुं
मेनिरे मुदितचेतसः प्रजाः ॥ १८ ॥

यदैव मूर्धन्यभिषेकधारा
महर्षिदत्ता निपपात राज्ञः ।
अमर्षदत्ता हृदये तदैव
सन्तापधारापि सुयोधनस्य ॥ १९ ॥

ततश्च प्रज्वलिष्यत्प्रतापत्रासशरणागतं द्युमणिमण्डलमिव मणिमकुटं शिरसा[1] संभावयन्नर्धराज्या[2]भिषेक इति प्रजाभिः प्रमोदविस्मृतमनुस्मारयितुमिवार्धराजाकृतौ फालदेशे कृतपट्टबन्धनो रत्नभूताः सर्वेऽपि वयं त्वामेवाश्रयाम इति मन्त्रितुमिव कर्णान्त[3]र्गतैर्दिव्यमणिमण्डलैराकालितकुण्डलः परनगरेभ्यः समुपगम्य वक्षोभागमारोक्ष्यतीनां विजयलक्ष्मीणां गणनाङ्कानिव मौक्तिकगणानुरसा धारयन् कनकवलयभरणमिषाद्दू[4]रणिवलयमेव निरायासं भुजेनोद्वहन्[5]निव समरोद्यमकौ[6]तुकादिव कटकबन्धदर्शितश्रीरतुललक्ष्मीप्रदातृतयेव समुद्रतां गतेन विद्रुमकान्तिधरेण करेणोल्लसन् परिहितदिव्यक्षौमोपरि विराजितानेककाञ्चीमण्डलतयैककाञ्चीलाभचरितार्थं तुण्डीरराजं विडम्बयन्निव क[7]मलाक्षकटाक्षपथेनावतीर्णयेव दुर्योधनकुनयभयेन[8] समाश्रितयेव सद्यःप्रविष्टया राजलक्ष्म्या विशेषोज्ज्वलीकृततनुः सादरप्रणतैः सोदरादिभिः[9] साकं नागपुरप्रदक्षिणाय प्राक्रमत ।

---

१. ' सि सं ' क. ख.  २. ' भिषिक्त इति ' क.
३. ' न्तरागतै ' क.  ४. ' रणीवलय ' ग. घ.
५. ' हन् सम ' ग. घ.  ६. ' कुतुका ' क.
७. ' कमलाकामुककटाक्ष ' ग. घ.  ८. ' न सद्यः ' ग. घ.
९. ' दरैः साकं ' क.

ब्रह्मवर्चसिभिरर्पिताशिषो
राजवर्चसधरो नरोद्वहः ।
पल्यवर्चसिनि हस्तिवर्चसि-
न्यास्थितः करिणि पर्यगात् पुरीम् ॥ २० ॥

ततश्च नगरपरिक्रमणप्रकटितप्रभावहल्लोहलनिर्लोलितमानस-सकलमानवविविधमाननावलोकनादमर्षप्रकर्षप्रधर्षितधीरसूयानिधिः सुयोधनो रहसि पितरमेत्य शोककलिलो विललाप ।

त्वं पार्थसात्कृतश्री-
र्दासेरप्रमुखदुरुपदेशेन ।
दासीकरिष्यसि परं
तेषां बत कुरुकुलार्भकानेतान् ॥ २१ ॥

निशम्य चैतत् सन्तापशाली सान्तर्विचारो गान्धारीपतिः कौन्तेयानाहूय सान्त्वयन्नेवमवादीत् ।

पुत्रा मे दुर्विनीता मृदुलमतिरमून् नाहमीशे निरोद्धुं
तद् याचे सस्यकान् वो ननु सहवसतौ संपतेयुर्विरोधाः ।
पूर्वैरध्यासितं प्राक् करिपुरजननात् खाण्डवप्रस्थसंज्ञं
तं देशं यात यूयं सकलहितपरा माधवो मन्यते चेत् ॥ २२ ॥

इति वदति कुरुपितरि पितृवचनं मानयितव्यमेवेति माधवगिरा पाण्डवेषु खाण्डवप्रस्थप्रस्थायिषु धर्मसुतस्य राज्ञो लोकरञ्जनशक्त्या वी

१. 'वरो' क.
२. 'प्राभव' क.
३. 'नामर्ष' घ.
४. 'शोकाकुलो' ग, 'शोकाविलो' घ.
५. 'सान्तापिनशाली' क
६. 'आदीना' क.
७. 'प्रस्थं प्रस्था' ख.

नन्दसुतस्य हृदयाकर्षणशक्त्या वा सहैव प्रतिष्ठासमानेषु नागरजनेषु[1] अर्धप्रभुणा सह निर्गच्छतां कुलोच्छेदः प्रतिक्रियेति प्रतिरुन्धति ससौबले सुयोधने तेषु च लक्ष्मीसहायमेव सहायं मन्यमानेषु यौतकलब्धबलमात्रानुयात्रिकेषु व्यासधौम्यादिसमेतेषु क्रमेण सञ्जातकफलमिवापुरायधिष्ठितं विष्णुलोकमिव विमुक्तजनवासं[2] तल्पदेशमिव कान्तारचितं तत्प्रदेशमवाप्य निवासोपायं चिन्तयत्सु पौरेयानस्मान् वानेयान् कुर्वतः सुयोधनस्याहमद्यैवेत्यर्धोक्तिविरते क्रुद्धात्मनि वृकोदरे चिरन्तनेन पुंसा विचिन्तितस्य पुरन्दरस्याज्ञया पुरतो ददृशे[3] किल निरायासनिखिलशिल्पकर्मा विश्वकर्मा ।

इन्द्राज्ञयागतोऽहं नन्दात्मज तव हि शासनं कर्तुम् ।
तत्किं करोमि भगवन्नित्ययमपतत् पदाम्बुजे शौरेः ॥ २३ ॥

इन्द्रप्रसादपिशुनामिन्द्रप्रस्थाभिधां पुरीमधुना ।
ईननन्दिनीतटान्ते[4] विरचय करकौशलानुरूपां[5] ते ॥ २४ ॥

इति हरिवचनेन त्वष्टरि स्पष्टमेव
स्पृशति किमपि पृथ्वीं विश्वतः पार्श्वधेन ।
अलसदवनिपृष्ठाद् गोपुरोद्यानवापी-
मणिभवनसहस्रभ्राजिता राजधानी ॥ २५ ॥

या सूत्रकारप्रवरस्य वैभवात्
क्वचिन्न वक्तव्यपदं समेयुषी ।
अशेषसम्पादितगुप्तिबन्धना[6]
श्रियं दधौ व्याकरणातिगामिनीम् ॥ २६ ॥

१. ‘ नागपुरजनेषु ’ क.  २. ‘ जनावासं ’ ग. घ.
३. ‘ या ददृशे ’ घ.  ४. ‘ इह नन्दिनी ’ क. ख. ग.
५. ‘ रूपं ते ’ घ.  ६. ‘ गुप्तव ’ ग.

तनश्च विश्वकर्माणं विश्वनाथं वा मनसि बहुमानयत्सु विस्मय-प्रमोदाकुलेषु सकलेषु,

दत्त्वा धनं धर्मसुतो द्विजेभ्यो
जयेति जीवेति विघोषिताशीः ।
आरूढनागो नगरीमयासी-
द्धरिं पुरोधाय दिवं यथेन्द्रः ॥ २६ ॥

ततश्च,

दिव्यश्रीजुषि तत्पुरे कुतुकिनो देशान्तरादागता
विप्रेन्द्रा वणिजश्च सर्वनिगमप्रष्ठाः प्रतिष्ठां ययुः ।
शिल्पज्ञा अपि गायकाश्च गणिकाः सद्वर्णरागश्रियः
किं भूम्ना वचसां दिनैः कतिपयैः पूर्णं तदासीत् पुरम् ॥ २७ ॥

तत्राथ सूतजसुयोधनसौबलाद्या
भीष्मादिभिः सह समेत्य सभाजितास्तैः ।
आलोक्य तत्पुरविभूतिमभूतपूर्वा-
मन्योन्यमौनशरणाः स्वपुरीमवापुः ॥ २८ ॥

त्वष्टारमिष्टैरुपचारभेदैः संप्रेष्य संप्रीणितपौरलोकाः ।
पश्चापि पाञ्चालसुतामुखेन्दुसञ्जोषसञ्जातरसा ननन्दुः ॥ २९ ॥

(इति युधिष्ठिराभिषेकप्रबन्धः समाप्तः ।)

---

१. 'वा बहु' क. २. 'ताशः' क. ख.
३. 'न्द्रः ॥ दिव्यं' ख. ४. 'तदोषामन्योन्य' क. ख. ग.

# सुन्दोपसुन्दोपाख्यानप्रबन्धः

इत्थं स्वमित्रजनमुच्चपदे निवेश्य
प्रस्थातुमिच्छति हरौ स हि धर्मसूनुः ।
सर्वं त्वयैव भगवन्नुपपादितं नो
भूयोऽपि पाहि कृपयेति पपात पादे ॥ १ ॥

मा मैवमुर्वीश ! तवैव भूम्ना
दिव्यं पदं धन्यमिदं गतोऽसि ।
संक्षिप्य वक्ष्याम्यथ धर्मसारं
सर्वात्मना मानय भूमिदेवान् ॥ २ ॥

*अपि च—

अभियास्यति नारदोऽद्य युष्मान्
महितान्यस्य वचांसि मानयध्वम् ।
अचिरेण सखे धनञ्जय ! त्वां
सहजौत्सुक्ययुषं विलोकयिष्ये ॥ ३ ॥

इति समामन्त्र्य सन्तापशालिनीं कुन्तीमप्याश्वास्य पुराकृतदधिघृतचोरणवासनयेव सस्नेहानि सकलजनमनांसि चोरयन् द्वारकां ययौ सीरिणा सह नारायणः‡ ।

---

* घङपाठयोर्वाक्यमिदं न दृश्यते ।

‡ कगपाठयोरेतदनन्तरं ' तदनु च ' इत्याधिकतया वर्तते ।

आनन्दमन्दगमनो नवरागयोगै-
नारायणेति मधुरं [1]ध्वनमानवीणः ।
श्रीनारदः सपदि शारदनीरदश्री-
चोरेण चारुमहसा ददृशेऽम्बरान्तात् ॥ ४ ॥

तं च स्फटिकघटितमिव मुक्तात्मकमिव सत्त्वोच्चयमिव *प्रसाद-मयमिव प्रसन्न[2]मुरारिहसितच्छायानि[3]र्वीतमिव समीपमुपसरन्तमभि-वन्द्य परमासने निवेश्य तद्व[4]चनश्रवणकुतुकिषु निषण्णेषु पाण्डवेषु सस्मितमसाववादीत् ।

वैरप्रियोऽस्मि भवतां तु वधूनिमित्तं
नैवास्तु वैरमिति शासितुमागतोऽहम् ।
नन्वेकवल्लभतया सहवर्तिनां वः
स्निग्धात्मनामपि कदापि भिदा भवित्री ॥ ४ ॥

शृणुत च कथामिमाम्— पुरा खलु हिरण्यकशिपुकुलसम्भव-निकुम्भाभिधनिलि[6]म्परिपुतनयौ अकम्पानुरागौ अहंभा[7]वाभिमानाविव कामजा[8]ड्योदयाविव लोभदुराचाराविव द्वन्द्वचारिणौ सुन्दोपसुन्दौ 'अमरत्वं करिष्याव' इति अभिसन्धाय विन्ध्याचलसीम्नि निज-पिशितहोमभीमरूपं तपस्तेपाते ।

* खगघङपाठेषु 'प्रसादमयमिव' इत्यंशो नास्ति ।

१. 'स्वनमान' ख.  २. 'मुररिपुह' क. ख. ग.
३. 'निपी' क. ख.  ४. 'चःश्रवण' क. ख. ग.
५. 'स्मि' घ. ङ.  ६. 'म्पारितन' क. ख. ग.
७. 'भावमाना' ग. 'भावावमाना क. 'भावावलेपाविव' ख.
८. 'जाड्यो' ङ.

ततस्तौ मनस्तापशालिसमस्तामरप्रहित[1]प्रमुग्धाङ्गनारत्नैरपि निर्विसर्गौ सुरविरचितमायाराक्षसशूलनिहन्यमानशरणागतनिजमातृभगिनीजनसमाक्रन्दनैरप्यनास्पन्दितौ वरप्रदानाय प्रसन्नतामभिनीय समेयुषि सरोजव[2]सतौ कामितं करोमीति पुरैवाभिधानादमरत्वं न ददामीति सान्तर्भयं ब्रुवाणे निजप्रणयविस्रम्भात् परस्परस्यैव वध्यतां वरमवृषाताम् । [3]ततस्तौ फलतो लब्धामरत्ववरौ सुरारिपुरेषु पीयतां गीयतामिति समुद्धोष्य निबद्धोत्सवं वत्सरमात्रं नीत्वा जगत्पीडनोद्यतौ वरप्रभाव[4]मवगम्य ब्रह्मलोकमारूढपूर्विणा गीर्वाणगणेन विसृष्टं त्रिविष्टपपदमनायासमेवाक्रम्य भुवस्तलेऽपि समस्तलोकधर्मपथान् निर्म[5]थन्तौ ग्रावप्रहितबाणप्रतिमशापप्र[6]हारान् प्रधावतो द्विजातीनपि करोपकर्षं गलोपपीडं पिंषन्तौ तत्र तत्र निलीनानपि मुनीन् ग्रहदोषानिव गजकेसरिरूपेण व्यापादयन्तौ अचिरादेव रुधिरपिच्छिलं कङ्काळपाङ्किलमस्थिदुश्चरं [7]धरणीचक्रं चक्रवांसौ कुरुक्षेत्रे निबद्धपत्तनौ नित्यमेव मद्यमत्तौ मत्तकाशिनीशतेन सह तत्तद्देशेषु चिरमरंसाताम् ।

ततः स्वयम्भुं मुनयः प्रपन्ना-
स्तयोः प्रवृत्तिं निखिलां शशंसुः ।
विजित्य लोकान् वनितापरौ तौ
निशम्य धाता विमृशन्नवादीत् ॥ ६ ॥

एहि विश्वकर्मन्! विश्वमधुरपदार्थानाहृत्य सकलसुराङ्गनातिगामिनीं कामिनीं कामपि कामनीयकसारनिधिमारचयेति ।

---

१. ' तमुग्धा ' क.
२. ' सतौ करो ' क. ख. ग.
३. ' ततश्च फल ' ख. ग. घ. ङ.
४. ' मधिग ' क.
५. ' थन ' ग.
६. ' हरान् ' ङ.
७. ' क्षोणीच ' घ. ङ.

सोऽपि भुवनत्रयसमाहृतेभ्यः सकलद्रव्यरत्नेभ्यः सुधारससुधां सुकलामधूळीसारमृणाळीलतासुरतरुकुसुमकिसलयादिभ्योऽपि तिलमात्रमेव सारतरांशमादाय योजयन्नतिचिरकृतावधानः सुरशिल्पं भुवनशिल्पिना मध्ये मध्ये समुपदिश्यमानो विश्वमदनीयरूपमदनाद्वैतविद्यामिवातिहृद्यामनवद्यामकरोदमराङ्गनाम् ।

किमहं करवाणि वाणिनाथे[1]-
त्यवनम्रामवलोक्य तां ज्वलन्तीम् ।
द्रुहिणो मुदितो दिदेश तस्यै
भुवनाकर्षणशक्तिमद्वितीयाम् ॥ ७ ॥

तिलांशमादाय मनोहरेभ्यः
कृतासि यत्नेन तिलोत्तमा[2] त्वम् ।
सुन्दोपसुन्दौ वरदानदृप्ता-
वन्योन्यवैराय विलोभय त्वम् ॥ ८ ॥

इति कथिता सा तथेति विधातारं प्रणम्य कान्तिकल्लोलै[3]र्मुहुर्मुर्जगदन्तराळं क्षाळयन्तीवा[4]कर्षन्तीव[5] गन्तुकामा सभावस्थितं सुरमुनिमण्डलं स्वभावललितविलासशतमन्थरं प्रदक्षिणीकर्तुकामा लज्जावनम्रवदनबिम्बैः निगूढवलमानसस्मितकटाक्षमोक्षैः स्पन्दमानकुचभरविभद्गुरमध्याङ्कुरै[6]रतिमोहनमणिमेखलाघटितजघनभरैर्विलोलदुकूलाञ्चलैर्विरणि[7]तमणिनूपुरैश्चरणविन्यासैररुणीकृतधरणीचक्रा[8] परिचक्राम

1. ‘वाणीना’ क.  2 ‘मासि’ ख. ग. घ. ङ.
3. ‘लैर्जग’ ग.  4. ‘व विकर्षयन्तीव’ घ. ङ., वाकर्षयन्ती क. ग.  5. व विमोहयन्तीव गन्तु’ ख. घ. ङ.
6. ‘ङ्कुरैर्विलोल’ ख. ग. घ. ङ.
7. ‘णितधर’ क.  8. ‘क्रं प’ ङ.

तां वीक्षितुं परित एव समुत्सुकस्य
शम्भोरभूत् किल चतुर्दिशि वक्त्रमाला ।
शक्रः सहस्रनयनोऽपि तदा किलासी-
दन्यान् पुनः किमु वदामि विलोलभावान् ॥ ९ ॥

ततस्तद्रूपदर्शनात् सिद्धमेव कार्यं मन्वानेषु सुरेषु सा च पुनर्विलासविलोभितलोका भुवमुपगच्छन्ती यदृच्छया विन्ध्याचलवनशिलातलेषु रहोविहारिणोः सैन्यस्थाने समाहृतगदायुगळयोर्मदिराक्षीसहाययोर्मदिराक्षीबयोः सुन्दोपसुन्दयोरनतिदूरे कुसुमापचायैर्विहरन्ती विकिरन्ती कान्तिसुधां विचचार ।

तौ च विहरणरसान्तरे लतान्तरेण कान्तिकन्दलीदर्शनात् सरभसमुत्थायोपसरन्तौ निरुपमसुषमामयं दिव्यरूपमालोक्य दूरनिराकृतधैर्यसारेण मारवीरेण पारिप्लवीकृतहृदयौ सोन्मोहाविव सोन्मादाविव तदुपान्तमापतुः ।

त्रपाकुलं तत्र तरूपकण्ठे
मनाङ् निलीना सुरसुन्दरी सा ।
भागद्वयानुप्रहितैरपाङ्गै-
स्तस्थौ क्षणं द्वावपि मोहयन्ती ॥ १० ॥

ततस्तौ प्रस्तुतप्रियसल्लापावुभावपि निजानुभावं निश्चिन्वानौ उचितवेदी किमयं नापसरतीति सासूयं परस्परं निरीक्षमाणौ पुनरपि

---

१. ‘ सा पुन ’ ङ.        २. ‘ न्ध्यवन ’ ख. ग. घ. ङ.
३. ‘ चयै ’ क.        ४. ‘ मापततुः ’ घ. ङ.
५. ‘ निजार्द्रभावं ’ ख. घ. ङ., ‘ निजनिजार्द्रभावं ’ ग.

कालासहकाममदवेगादहमिमां गृह्णाम्यहमेवेत्युदितरोषं विवदमानौ एकैकमस्याः कराम्बुजमनुगृह्णन्तौ गुरुवधूं न स्पृशेति अनुजवधूं न स्पृशेति वादिनौ रोषातिभूमिमारूढौ ।

स्वां स्वामाशु गदां समीपनिहितामादाय साङ्ग्रामिकीं
घोराघातपरौ मुहुः सुरवधूवक्त्राब्जदत्तेक्षणौ ।
सद्यश्चूर्णितमस्तकस्रवदसृग्व्याजेन रागच्छटां
मुञ्चन्तौ निपताम्बभूवतुरुभौ सुन्दोपसुन्दौ क्षणात् ॥ ११ ॥

गत्वा तत्र समं देवैर्मानयित्वा तिलोत्तमाम् ।
प्रतिष्ठाप्य सुरश्रेष्ठान् परमेष्ठी ययौ मुदा ॥ १२ ॥

एवं दृढप्रणयिनामपि वैरयोगात्
कान्ता परान्तिकगता न विलोकनीया ।
स्वां वल्लभां पुरत एव परार्द्रभावां
दृष्ट्वा शिलेयमतयोऽपि कथं सहेयुः ॥ १३ ॥

एकैकवासरतया नियमे कृतेऽत्र
निश्चयभङ्गिनि भवेद्द्वयो विरोधः ।
तस्मात् सुखोऽपि नियमो बहुकालभावी
शेषं विचिन्तयत नीतिचणा हि यूयम् ॥ १४ ॥

श्रुत्वा युक्तियुतं वचो हरिगिरं स्मृत्वा च निःसंशया-
स्ते वह्नेरिव नारदस्य पुरतश्चक्रुः प्रतिज्ञामिमाम् ।

---

१. 'मदवशादह' घ. ङ. २. 'स्पृश अनु' ङ.
३. 'रक्तच्छ' ग. ४. 'तत्र गत्वा' ख. ग. घ. ङ.

एकैकाब्दममूं भजेमहि वधूं यस्त्वेनया संयुतं
पश्येत्नः स हि वत्सरं व्रतधरः प्रावासिकः स्यादिति ॥ १५ ॥

(इति सुन्दोपसुन्दोपाख्यानं समाप्तम् ।)

*वागीशानिलवामदेववलभिन्मुख्यैरशेषैः सुरैः
सर्वैर्नारदशौनकादिमुनिभिश्चासेव्यमानं हरिम् ।
दुग्धाम्भोनिधिफेनकूटधवळे भोगीन्द्रतल्पे मुदा
तिष्ठन्तं दनुजारिमर्चनसखं पूर्णत्रयीशं भजे ॥

---

* पद्यमिदं कपाठे परं दृश्यते ।

# सुभद्राहरणप्रबन्धः ।

इत्थं कलत्रव्यवस्थां द्रुपदनृपसुतामानुपूर्व्या भजन्तो
   याते तस्मिन् मुनीन्द्रे हतविमतजना वर्धयन्तः स्वराज्यम् ।
रोषस्याकस्मिकत्वात् क्वचिदनुचितेऽप्यायुधादानभीत्या
   राजान्तर्न्यस्तशस्त्राः [1]सुखमिह नगरे रेमिरे पाण्डुपुत्राः ॥ १ ॥

अधिनिशमथ सुप्तासुप्तलोके पुरान्ते
   कमपि रुदितघोषं शुश्रुवानिन्द्रसूनुः ।
कुरुतनयकुनीतिप्रेरितैर्घोरपाशै-
   रपहृतपशुपङ्क्तेः कस्यचिद् भूसुरस्य ॥ २ ॥

माहाकुलस्य हरणं च महीसुरस्य
   [2]माहाकुलस्य रुदितं च निशम्य कानी ।
पार्थोऽस्मि ते शरणमित्यभिधाय चिन्तां
   चक्रे स राजगृहयोजितशस्त्रजालः ॥ ३ ॥

शक्यं न कालहरणं हरणे पशूनां
   प्राप्यं न भूपतिगृहं दयितासमेतम् ।
तत् किं करोमि गहने बत सङ्कटेऽस्मिन्
   पथ्यं प्रबोधयतु मे भगवान् मुकुन्दः ॥ ४ ॥

किं वा विचारैर्द्विजरक्षया मे
   [3]कालेन भद्रागम एव भावी ।

---

१. ‘ चिरमि ’ क.      २. ‘ मोहा ’ क. ट.
३. ‘ प्रायेण भद्रा ’ ख.

क्लेशं तु धीरा मुखतः प्रवृत्तं
भाविप्रियावाभिरसात् सहन्ते ॥ ५ ॥

इति निश्चित्य निश्चलमतिघरटितकवाटं धर्मजभवनमधिगम्यावनम्य[1] तदाज्ञां कार्मुकलतां च परिगृह्णन् क्षिप्रमेव विप्रमनुगतं विद्रवतः पाटच्चरखेटान् महाटवीमुपाटितुकामान्[2] विपाठकूटैर्विपाटयन्नुपादाय कीर्त्या सह गोत्रां गोत्रारिसूनुर्गोत्रासुरगोत्राग्रिमेण तेनाप्यतर्कितानि श्रेयांसि लभस्वेति प्रयुक्ताशीः[3] परिप्रीत्या पुरं प्राप्तं[4] निशाशेषमनैषीत् ।

प्रातस्तरां च तीर्थगमनार्थी पार्थो[5] धर्मसुतं प्रणतः प्रणयाकुलेन तेन यवीयसो जायासहितज्यायोदर्शनं न दोषायेति[6] प्रतिपाद्यमानोऽपि सत्यसन्धा वयं न कूटधर्माण[7] इति वादी तदनुमोदितो[8] मुदितमानसं भीममपि प्रेमशोकमानरोपशङ्काकुलमनुनीय यमाभ्यामभिवादितं सततमेव सातङ्कां[9] मातरमपि प्रणमन्[10][11] पाञ्चालीपरिसरमयासीत् ।

सापि स्वकारणमिदं व्यसनं स्मरन्ती
प्रेमाकुला किमपि वक्तुमपारयन्ती ।
साभ्यर्थनैरपि च सानुनयैः सबाष्पै-
र्नेत्रैः कथञ्चन मुमोच बबन्ध चैनम् ॥ ६ ॥

---

१. ' वगम्य ' ख.
२. ' टवीतटमुपा ' अ. ट.
३. ' क्ताशीर्वादः परि ' ध.
४. ' पुरप्राप्तो ' ग. छ. ज.
५. ' नार्थी स पार्थो ' ट.
६. ' ति बहुधा प्रति ' क.
७. ' टकर्माण ' ट.
८. ' नुचोदितो ' म.
९. ' नदोष ' ख.
१०. ' तङ्कं मा ' क.
११. ' णम्य पा ' ख.

ततोऽयमेकसांवत्सरिको गृहीतयशोधनश्चातुर्वैद्यधार्मविद्यक्षात्रविद्यवैदान्तिकपौराणिकैतिहासिककाथिकैर्मुखैर्मुकुन्दभक्तिभासुरैर्भूसुरैरनुगम्यमानो भाविदिग्विजययात्रामासत्रयान्निवोत्तराशां प्रस्थितस्तापहराणि पापहराणि च शिशिरपुण्यानि सरित्सरोरण्यानि भजन्नुपहिमवतं गङ्गाद्वारमाससाद ।

तत्र च स्नात्वा सायं तत्तीरप्रस्तुताग्निकार्यादिनियमेषु महीसुरेषु सायंकालस्नायी कृतसन्ध्यावन्दनः शक्रनन्दनो न ददृशे ।

ततो विषण्णेषु शुभोन्मुखेषु
द्विजेषु तत्रैव वसत्सु रात्रिम् ।
स चोदमज्जन्मुदितो जलान्तात्
पयोनिधेरर्क इव प्रभाते ॥ ७ ॥

ततः सकुतुकमेत्य पृच्छत्सु च तेषु बभाषे— अहं खलु नित्यक्रियावसाने प्राप्तया कयापि काम्यरूपया पूर्णाङ्गया भुजङ्गाङ्गनया दर्शितापूर्वपथया बलादपहृतो नाकनिलयमिव सुरवाहिनीमध्ये नागनिलयं नीतस्तत्र च रहसि मदनमदवेगलज्जानतमुखीमुपतिष्ठन्तीमिमां कुलनामनी पर्यपृच्छम् ।

कौरव्य ! कौरव्यसुतामुलूपीं
जानीहि मां वेद्मि च ते विशेषान् ।

---

१. 'द्यवैदान्तपौ' क. ख. ग. ब. ङ, 'द्यवैदा' ट.
२. 'कप्रमु' च. ज. ञ. ट. ३. 'मनोऽपि भा' ञ. ट.
४. 'शां प्रति प्र' च. ञ. ट. ५. 'णि च शिशि' छ. ट.
६. 'नः स शक्र' ञ. ट. ७. 'नयत्सु' क. ख.
८. 'त्सु तेषु' क. ट. ९. 'दुपहृ' क. ख.
१०. 'लयमुपनीत' ख. ग. ङ. छ. झ. ११. 'नमिव' च. झ.

[1]स्नायन्तमालोक्य नदीजले त्वा-
मानैषमानङ्गविमोहलोला ॥ ८ ॥

[2]तां मां प्रणयमग्नां मदनभग्नां पालयेति चरणलग्नामधिकल[3]कुशावलग्नामिमामुपलालयन्नहमवादिषम्—

अयि सुमुखि! वपुस्ते मोहनं मोहनाना-
मतिलघु परिरब्धुं चित्तमत्युत्सुकं मे ।
गुरुजनविहितेन द्रौपदीहेतुकेन
प्रणयिनि! चकितोऽस्मि ब्रह्मचर्यव्रतेन ॥ ९ ॥

इति वदन्तं मां सा पुनरवादीत्—

द्रौपदीं प्रति कृतः समयश्चेद्
ब्रह्मचर्यमपि तद्विषयं ते ।
नाथ! कष्टमथवा व्रतलोपाद्
दीनरक्षणमिदं नु गरीयः ॥ १० ॥

इति [5]धर्ममेव वदन्त्यां तस्यां नारदाय पूर्वजाय च मनसा प्रणम्य मन्मथनिर्मथितामिमां न[4]मतलिममारोप्य सरभसपरिरम्भसंभ्रमत्रुटित नागहारानतिरसनिरङ्कुशानभिनवाननङ्गसङ्गराननुभवन् यामिनीमिमां भुजङ्गपुत्र्या सममनुकूलो भुजङ्गोऽभवम् ।

ततः प्रभाते ददृशे सुतो मे
स्फुरन्निरावानिति [6]दाक्ष्यशाली ।

---

१. 'स्नान्तं समा' ट. २. 'तन्मां' ट.
३. 'कुशविल' ख. ग. घ. च. छ ज. झ. ञ.
४. 'न ग' ङ छ. झ. ञ. ५. 'धर्म्यं' ग. घ. ङ. छ. ज. झ.
६. 'दाक्ष्यंशा' ट.

निधाय कौरव्यवशे मुदा तं
　प्रियां समालिङ्गय समागतोऽस्मि ॥ ११ ॥

इति ।

स ततो हिमवन्तमेत्य पश्यन्
　विजयस्तम्भपरम्परां कुरूणाम् ।
बहुमानयुतो ननाम तेभ्य-
　स्त्वरितश्चाजनि नूतराजसूये ॥ १२ ॥

ततः क्रमादौत्तरा[1]हाणि तीर्थानि [2]निषेव्य पौरस्त्यपथगामी पुण्यस्थलेषु वासं वासं, पुण्यजलेषु स्नायं स्नायं, मणिगोहिरण्या[3]नि दायं दायं, हरिनामक[4]था गायं गा[5]यं, सहायैः सहायासहीनं परिक्रामन् भगीरथ[6]चिरयत्नकीर्तिमालां पुरहरशिरोम[7]ल्लिमालां तामपि महानदीं निमज्ज्य [8]प्रतिगिरमनुनदमन्वाश्रममुपस्था[9]य पुनरपि[10] स[11] तीर्थभक्त्या दक्षि[12]णाशाभिमुखो बभूव ।

कृतवीर्ययशोविवर्धनः
　समुपैति स्वयमर्जुनोऽधुना ।
इति तत्र निशम्य नर्मदा
　क्षणमासीत् स्वनिरोधशङ्किनी ॥ १३ ॥

---

१. ' राशानि ती ' ट.　　२. ' सन्निषे ' ज.
३. ' ण्यादि दा ' ट.　　४. ' कथां गा ' घ.
५. ' गायं परि ' ख.　　६. ' थराचितकी ' क. ट, ' थचरित्ररत्नमा ' ख, ' थचिरत्नकी ' ङ. च, ' थाचिरप्रयत्नको ' छ. झ, ' थराचितरत्नकी ' ञ.　　७. ' मल्लिकामा ' ग, ' मल्लिकां ता ' घ.
८. ' प्रतीर ' क. ञ. ट.　　९. ' स्थानीय ' ग. घ. ङ. च. छ. ज. ञ　　१० ' पि तीर्थं ' ट.　　११. ' सत्तीर्थं ' घ. छ. झ.
१२. ' णाभिमु ' ट.

ततः कलिङ्गराष्ट्रद्वारे महाब्राह्मणान् विसृज्य कतिपयसुहृत्सहायः पौर्वसैन्धवकच्छेन तमालासच्छायेन विच्छायन्नधिगोदावरिकावेरि च निमज्जन् कपिशकर्ममपाळिनिचोळां चोळावनिमतित्र चित्रवाहनयशोमण्डलपाण्डरां पाण्ड्यभुवमिमाहिण्ड्य तत्रापि तीर्थसिषेवे ।

संवत्सरस्तावदवाप सीमां
पार्थोऽपि यातो मणलूरसीमाम् ।
तत्रापि चित्राङ्गलतां ददर्श
चित्राङ्गदां नाम स पाण्ड्यपुत्रीम् ॥ १४ ॥

मुग्धस्मितैरपि च मौक्तिकदामरम्यै-
र्नीलाब्जदामललितैरपि नेत्रपातैः ।
तस्यापि गात्रलतया तरळेक्षणा सा
गाढं बबन्ध किल मानसमिन्द्रसूनोः* ॥ १५ ॥

---

१. ‘ सुहृत्सहा ’ छ. २. ‘ हायैः पौ ’ ञ.
३. ‘ रि कावेरीं च ’ ट. ४. ‘ ळमनिचो ’ ग. घ.
५. ‘ पाळीनि ’ च. छ. ट. ६ ‘ भूमिमा ’ क. ग. घ. ञ. ट.
७. ‘ तत्र च ’ छ. ञ. ट. ८. ‘ निषे ’ च. छ.
९ ‘ त्रीम् ॥ १४ ॥
सुमं च बाणं बहुपर्वचापं विसारिकेतुं चपलां च मौर्वीम् ।
विहाय वीरो विजयं विजेतुं चित्राङ्गदामादित चित्तजन्मा ॥
मुग्ध० ’ ख. ज. १०. ‘ लसितै ’ ञ. ट.
११. ‘ तन्व्यापि गा ’ क. घ. ज. झ.

---

* चपाठे अतः परं ‘ सुमं च बाणं० ’ इत्यादिपद्यं ख, ज पाठवत् ।
‘ मानितश्चासौ ’ इत्यादि ।

मानितश्चा[1]सौ तत्र तत्पित्रा चित्रवाहनेन चित्तवेदिना बहुमोद-मित्थं कथयाम्बभूवे ।

हे वीर! शङ्कर[2]गिरा नियतैकपुत्रे-
ऽप्य[3]स्मत्कुले मम पुनस्तनयैव जाता ।
तस्मात् तदीयतनयस्तनयो ममेति
ज्ञात्वाद्य मामनुगृहाण गृहाण बालाम् ॥ १६ ॥

इति ।

तदनु च मुदितोऽयं प्राप्य चित्राङ्गदां ता-
मभिनवरतिलीलाला[4]लसां लोलनेत्राम् ।
[5]क्रमविगळितलज्जां लालयन् केळिभेदै-
र्व्यहृत कमपि कालं मानयन् मन्मथाज्ञाम् ॥ १७ ॥

ततो मदनोत्सवमये मासत्रये गते पार्थस्तीर्थयात्राप्रकरणाविरो-[6]धाय प्रत्यासन्नानि दक्षिणार्णवतीरोत्थानि तीर्थानि भेजे ।

अखिलदुरवगाहस्फारगम्भीरवृत्त्यो-
र्[7]जलनिधिरघुपत्योर्भेदविज्ञानहेतुम् ।
दुरिततरणसेतुं रामसेतुं स दृष्ट्वा
न खलु पुनरसाध्यं मानिनामित्यजानात् ॥ १८ ॥

---

१. ‘ श्चासौ तत्पि ’ च. छ. झ. ञ. ट.    २. ‘ रवराश्रिय ’ झ.
३. ‘ प्यस्मिन् कु ’ ग. ध.    ४. ‘ लसो लो ’ ख. ग. घ. ङ. छ. ज. झ.    ५. ‘ किमपि ललित ’ ट.
६. ‘ धानि प्रत्या ’ छ.    ७. ‘ तन्नास ’ ख.

तत्र च क्वचित् पञ्च[1] तीर्थानि जनपरित्यक्तानि दृष्ट्वा परिपृ मुनिजनेन खलकुल[2]निवासत्वाद्[3] ग्राहभीषणत्वाच्चास्माभिरुपेक्ष इत्यभिहितो वीरोऽयं वारितोऽपि[4] तैरेकं[5,6] सरः समुपासरत् ।

गम्भीरतोयमवगाह्य सरः किरीटी
कुम्भीरमाशु रदनो[7]द्यतमभ्यगृह्णात् ।
अम्भस्तटीमुपगतस्तु भुजावलग्नां[8]
कुम्भस्तनीं किल ददर्श कृशावलग्नाम् ॥ १९ ॥

सा चैनमवादीत्- अहं खलु वृन्दा[9] नाम वृन्दारकसुन्दरी ! चतसृभिः सहचरीभिः सह चरन्ती तपोधर्षणो[10]द्यमप्रकुपिततपोधनोग्र शापोपगतनक्रभावा केनापि वीरेण तीरोपनयने कृते विहितशापमो पार्थः समुद्धरिष्यतीति पथि नारदेनोक्ता ताभिः सह समेत्य सुती न्यमून्यपार्थयन्त्यपि त्वयानुगृहीतास्मि । इति ।

ततस्तत्प्रार्थनया तीर्थचतुष्टयगतानपि[11] नक्रवरानुद्धृत्य श पुराङ्गनी[12]चक्रे शक्रसूनुः[13] । तदा प्रभृति तान्यपि नारीतीर्थनामांक[14] जनसेव्यान्यकरोत् ।

---

१. ' ततश्च क ' च, ' तत्र च पञ्च ' ज. ञ.
२. ' कुलवासाद् ग्रा ' घ,
३. ' साद् ग्रा ' ङ. च. छ. ज. झ.
४. ' तोऽपि वीरो ' क. ख. ञ. ट.
५. ' तेष्वेकं ' ट.
६. ' कं स सरः ' क.
७. ' हननो ' ट.
८. ' भुजाव ' ट.
९. ' वृन्दा ' ट.
१०. ' धर्षणप्रकु ' ग. घ.
११. ' नविक्रमनक्र ' ट.
१२. ' वराङ्गिनी ' ट.
१३. ' नुः । चक्रपाणि० ' ख.
१४. ' माङ्गानि ' च ञ.

चक्रपाणिसखित्वाहं नक्रमोक्षणमाचरन् ।
विक्रमी स ययौ भूयश्चित्रवाहनमन्दिरम् ॥ २० ॥

तत्र च गणरात्रमिमामतिमात्रमधुरां मृदुगात्रीमनुभूय गमनार्थी पुनरवादीत् —

बाले सत्त्वयुतासि न त्वमधुना गन्तुं क्षमा मत्पुरीं
पित्रे पुत्रविवर्धनाय हि मनागत्रैव वर्तिष्यसे ।
पुत्रेऽस्मिन् जहति स्तनन्धयदशां कैश्चित्पुनर्वत्सरैर्-
मद्भ्रातुः किल राजसूयसमये गन्तासि कान्ते पुरीम् ॥ २१ ॥

चित्रवाहन! नन्वेष बभ्रुवाहनसंज्ञया ।
तनयोऽस्तु तवेत्येवं कथयन् स विनिर्ययौ ॥ २२ ॥

तदनु स खलु पाण्ड्यक्षोणिखण्डात् कुमारी-
निलयनमभियातस्तीर्णगोकर्णदेशः ।
चरमजलधितीर्थान्यासरन्नाप पार्थो
नियमिनिवहकामप्राप्तितीर्थं प्रभासम् ॥ २३ ॥

अधिकासन्नाभ्युदया-
मभ्युद्गच्छत्पयोधरोल्लासाम् ।
सरसः समाजगाम
प्रावृषमावेदयन् पुरोवातः ॥ २४ ॥

---

१. 'त्वाप्तनक्र' ग.
२. 'ततो गण' च.
३. 'राज्ञीं मृ' ञ. ट.
४. 'त्पुरं' ट.
५. 'गमितस्त' ट.
६. 'दशे कै' ट.
७. 'नर्वासरै' ख.
८. 'न्याचरन्नाप' ग. घ. ञ.
९. 'कामावाप्ति' ट.
१०. 'सम् ॥ अथ निशि॰' च.

तावत्पयोधरसमुद्गमपेशलाया
विद्युल्लतातरळकान्तिमनोहरायाः ।
वर्षश्रियोऽपि समये समभूत् प्रसङ्गो
हर्षप्रदोऽपि जगतां पथिकोपरोधी ॥ २५ ॥

पौरस्त्यवातविनिवेदितवृत्तिरादा-
वाशाः [1]सृजन्नलघुकृष्णघनावलम्बाः ।
[2]आविग्नमानसपरागतराजहंसः
कालो व्यजृम्भत[3] स जृम्भितपञ्चबाण*ः ॥ २६ ॥

अन्धीबभूव सकलो हि पुरःस्थितोऽपि
सम्भोग[4]योगि मिथुनं मुमुदे विशङ्कम् ।
मारेषुवर्षनिभमेदुरवर्षधारा-
नीरन्ध्रितेऽत्र समये निखिलैर्जनन्दे ॥ २७ ॥

अत्यूष्मळोऽपि दिवसो जडिमानमागाद्
रक्ता बभूव पृथिवी भृशमिन्द्रगोपैः ।
चित्रं पयोदसमयोपगमे निमेषाद्
वेषान्तरं रचितवानिव सर्वलोकः ॥ २८ ॥

अथ निशि ददर्श दैवाद्
गदनामानं स तत्र यदुतनयम् ।

---

१. ‘ स्पृशन्न ’ ञ. ट.    २. ‘ उद्विग्नमा ’ ट.
३. ‘ त विजृम्भि ’ ट.    ४. ‘ गयोगमि ’ घ.

---

* एतदनन्तरं ञ ट पाठयोः ‘ अत्यूष्मळो० ’ ‘ अन्धीबभूव० ’ इति क्रमो दृश्यते

मुदितश्च पर्यपृच्छत्
कुशलं मुर[1]माथिनो यदूनां च ॥ २९ ॥

सोऽपि चैनं मुदितमतिरवादीत्—

कुशस्थल्यामास्ते भुवनपतिरेतत्पदजुषां
शुभं किं प्रष्टव्यं यदि परमुदन्तोऽयमधुना ।
विशन्त्यास्तारुण्यं यदुपसहजाया वरतनोः
सुभद्रायाः कान्त्या पुरमजनि नेत्रामृतमयम् ॥ ३० ॥

इति निशम्य तदैव समुन्मिष-
न्मद[2]नैकौतुकभाजि धनञ्जये ।
समनुपृच्छति सस्मितमूचिवान्
यदुसुताशिशुकेळिसखो गदः ॥ ३१ ॥

कथमिव कथनीया शैशवे [3]शौरिणैव
प्रगुणितबहुशिक्षाचातुरी माधवी सा ।
भुवनमदनमूर्त्तेः सोदरीभावयोग्यं
जयति [4]सुकृतिभोग्यं तादृशं रूपमस्याः ॥ ३२ ॥

पुनरपि शृणु किञ्चिद् बाल्यकाले प्रसङ्गा-
[5]न्नरवर! तव वार्ता मादृशै[6]र्वर्ण्यमानाम् ।
निशमयति सहर्षं साभिलाषं[7] तदा सा
बहु खलु नहि जाने यौवनस्थामवस्थाम् ॥ ३३ ॥

१. ' रवैरिणो य ' ट.
२. ' नपावकभा ' घ.
३. ' केशवेन ' च. छ. ज. ञ.
४. ' सुकृतभो ' ञ.
५. ' न्नृपवर ' ग.
६. ' र्व्यङ्ग्यमा ' ञ.
७. ' षं च बाला न खलु बहु विजा ' ख.

इति गदति गदेऽस्मिन् मन्मथाक्रान्तचेताः
 पुरत इव सुभद्रामीक्षमाणः क्षणार्धम् ।
अपर इव स जज्ञे श्रोत्रवृत्त्या[1] हि गूढं
 विशति युवसु चेतोवञ्चकः पञ्चबाणः ॥ ३४ ॥

ततश्च विनिद्र एव सुभद्रागुणगणं[2]विचिन्तया तदवाप्त्यु[3]पायचिन्तया च नीतनिशाशेषः प्रभाते[4] पुनः पुरीगमनत्वरावतो मे निरीक्षणं[5]मिदं[6] निगूहनीयमेव त्वयेत्यभिमन्त्रिते यातवति यादवनन्दने भुजविक्रमदुर्निवारैर्मारसायकैरभिहन्यमानस्तरळापाङ्गाया यदुपुङ्गवानां च हृदयतत्त्वमविजानन् निर्जनान्यप्रसङ्गाद्विशङ्कितचेताः[7] सर्वथा[8] स एव भगवान् करुणानिधिर्मे शरणमिति मत्वा पुनरित्थं मतिमकरोत् ।

इतः परं कृष्णमतावबोधात्
 पुरो न मां कोऽपि विदाङ्करोतु ।
अतो गृहीत्वा लघु[9] भिक्षुवेषं
 मुकुन्दसंप्राप्तिविधौ यतिष्ये ॥ ३५ ॥

इति समवधार्य मदनाचार्योपदेशात्[10] सुदृढसुभद्रात्मसमर्पितान्तः[11]करणं सहायमहीसुराभिनीतशिष्यभावं[12] मायापथसन्न्यासमवलम्ब्य

---

१. ‘ त्या निगूढं ’ छ. २. ‘ णाचिन्त ’ च. छ. ज.
३. ‘ वाप्तिचिन्त ’ च. ४. ‘ ते पुरी ’ ट
५. ‘ णं निगू ’ ग. ६. ‘ दं गूह ’ छ.
७. ‘ ताः स एव ’ छ. ८. ‘ था स दयानिधिर्मे शर ’ ख, ‘ था करुणानिधिर्मे भगवान् शर ’ ञ. ९. ‘ खलु भि ’ ट.
१०. ‘ शात् सुदृढात्म ’ ञ, ‘ शात् सुदृढं सुभद्रात्म ’ ट.
११. ‘ करणः सहा ’ छ. ज. १२. ‘ भावः माया ’ छ. ज.

बीभत्सुः समागतायां निशायां जलदजलधारया मदनशरधारया च निःसहचेता चटकिटिकोटरकुटीरनिवासी तमेव सुभद्रासहोदरमुपाश्लिक्ष्य

गोविन्दः सत्यभामाकुचकलशपरीरम्भसंप्रीतचेताः
शय्या[1]यातस्तदानीं किमपि हसितवान् भामया चानुपृष्टः ।
प्रेयस्यै गूढमर्म्ये प्रियसखचरितं सत्यमेव ब्रुवाण-
स्तस्या एवानुमत्या यतिसविधमसावद्वितीयः प्रतस्थे ॥ ३६ ॥

पथि रैवतकाद्रिपालकं
[2]निभृतं भोज्यविधौ नियोजयन् ।
अभिगम्य यदृच्छयैव तं
यमिनं प्रैक्षत वार्क्षमूलिकम् ॥ ३७ ॥

सपदि स खलु पश्यन्नच्युतं सच्चिदेक-
स्वरसमधिकहर्षाद्विश्वमप्यप्रजानन् ।
सरभसपरिरम्भात् तत्स्वरूपे निलीनो
गलितसकलतापः प्राप सन्न्याससाध्यम् ॥ ३८ ॥

ततस्तौ समयात् प्रभृति चरितानि परितोषेण कथयन्तौ विजयमुकुन्दावतिमन्दं रैवत[3]कधरा[4]धित्यका[5]मागत्य तदुद्यानकेळिवेश्मनि मधुरान्नसौहित्ये निर्वृत्ते पुनरपि सन्न्यासचरितादन्या एव धन्याः कथा वर्णयन्तावाकर्णयन्तौ च सुखं सुषुपतुः ।

---

१. ' य्यां या ' ट.    २. ' विपृथुं भो ' क. ट
३. ' तकाधित्य ' ज    ४. ' राधराधित्य ' क. ख. ज. ट.
५. ' कामेत्य तदु ' छ.

*कृष्णावलोकनकृतार्थमनास्त्रपावान्
वक्तुं शशाक न तदा विजयो निजाशाम् ।
कृष्णोऽपि तत्र सुखवासममुष्य तन्व-
न्नेष्यामि भूय इति निर्गतवान् प्रभाते ॥ ३९ ॥

अकथनानुशयेन ततो भृशं कुरुयुवा परिदीपितमन्मथः ।
मुदितकेकिवृते ववृते गिरौ यदुसुतास्मरणं शरणं व्रजन् ॥ ४० ॥

सङ्कल्पदत्तदयितावनिविष्टचेताः
सङ्कल्पजप्रहितसायकसङ्कुलात्मा ।
पुष्यत्पयोधरमये समये स योगी
कृष्णं प्रतीक्ष्य कतिचिद् दिवसाननैषीत् ॥ ४१ ॥

मदनार्दितस्य जिष्णो
र्द्वयमेव दिनेषु तेषु शरणमभूत् ।
स्मृतिनिहितमम्बुजाक्ष्या-
स्तारुण्यं मुररिपोश्च कारुण्यम् ॥ ४२ ॥

सुभद्रा तु बाल्य एव गदनिगदितपार्थप्रभावश्रवणकन्दलित-कौतुकरसा कृष्णेनाप्यर्जुनोऽपि न मे तुल्य इति वीरवादान् अर्जुनतुल्य-गुणो भवेति बालजनाशीर्वादान् कृष्णस्यापि तत्तत्प्रसङ्गेषु प्रियसख-गुणवर्णनान्युपशृण्वती क्रमेण च सखीजनानुयोजितकौरवजाङ्गलजनवाचा

---

* कपाठे श्लोकोऽयं नास्ति ।

---

१. 'सान्यनै' घ. ङ. च. छ. ज. २. 'नो न मे' ख. ग. छ. ञ. ट.
३. 'ल्यो भवे' च. ४ 'रजाङ्ग' क. ख. ग. ट.

तत्त्वतो नि[1]शमिततदीयरूपमाधुर्या मुहुर्मुहुः श्रवणात् प्रत्यक्षमिव तं निरीक्षमाणा तारुण्यश्रिया लावण्यविलासैश्च सहैव दिने दिने परिवर्धमानमनोभवखेदा पुनरकाण्डे हलधरस्य सुयोधनप्रदानाभिला[2]षप्रभङ्गमाकर्ण्य तप्तजलसिक्ता निदा[3]घकालबालमालतीव दुरन्तसन्तापदन्दह्यमाना ततः स्वयंवर एव सर्वाभिमत इत्युपश्रुत्य किमपि समाश्वस्तचित्ता तदन्तरे[4] च पार्थस्य तीर्थया[5]त्रावृत्तं निशम्य त[6]त इतस्तदुदन्तान्वेषिणी सर्वथासौ प्रियसुहृदमनवलोक्य न यास्यतीति कलितविलोकना[7]शाभिनिवेशा पुनरपरान्तगमनात् परं तदुदन्त[8]मवेदयन्ती गतो वेति विचिन्त्य महाखेदमनुभवन्ती सामयिकसमापतितजलदागमप्रदीपितमन्मथा त्वत्कुशलकाङ्क्षी फल्गुनप्रियसखः कंसहन्तैव ते [9]तापोपहन्ता भविष्यतीति[10] हृदयसखीभिराश्वास्यमाना कथंकथमपि दिनानि निनाय ।

कतिपयदि[11]वसैः स केशवः सुहृदि चिकीर्षुरतर्कितं प्रियम् ।
प्रमुदितयदुलोकमातनोत् क्षितिभृति रैवतके महोत्सवम् ॥ ४३ ॥

ततश्च सद्यःसमलंकृतमणिसौधोपवने रैवतकदेशे यदुवीरेषु च प्रासादेष्विव सुधामार्जितचित्रसम्पाद्विलसितेषु उन्नतिमत्सु विभूषितेषु वनितासहायेषु समुपस्थितेषु पुराङ्गनासु च विटपाळिपरिवृतासु कुसुमसुकुमाराङ्गीषु ललितप[12]त्रिकावलीचित्रकाननासु मारन्दरससमु[13]द्भिन्नमुद्ग-

---

१. 'नियमि' ञ  २. 'षमाकर्ण्य' ज
३. 'घबाल' घ. ङ च. छ ज.  ४ 'रे पार्थ' ट.
५. 'त्राप्रवृत्तं' ज. ञ, 'त्राप्रवृत्तिं' ट  ६. 'ततस्तदु' घ. ज.
७. 'नाभिनि' छ, 'नाशा पुन' घ.  ८. 'मनावेद' ट
९. 'तापहन्ता' क. ङ. च. छ ज झ  १०. 'ति सखी' घ.
११. 'वसेऽथ केश' घ. ङ. च. छ ज झ. ञ
१२. 'पत्रावली' क. ङ. छ.  १३. 'न्नमिवोद्ग' क.

हन्तीषु लतास्विव वनान्तरपरिमिळितासु घनकाल इव नीलाम्बरे शशाङ्क इव रेवतीसखे बलासुर इव नवासवप्रिये बलेऽपि समुपागते पार्थचरितमिव प्रमोदितभरतकुलं सन्न्यासवृत्तिमिव सङ्गीतरसमाश्रितं सङ्गरोपक्रमणमिव चलितोग्रसेनानकदुन्दुभिसमुद्घोषितमुत्सवकौतुकमवर्तिष्ट ।

सर्वाङ्गनापरिवृतः स च सत्यभामा-
सल्लापसस्मितमुखो भगवानुपागात् ।
ता देवकीप्रभृतयोऽपि[1] मुदा समीयुः
सा द्वारकेव[4] किल नागमदुत्सवाय ॥ ४४ ॥

तत्राथ[2] यादववधूसहिता सुभद्रा
लीलोत्सवानुगुणवेषविशेषरम्या ।
साकं सखीभिरलसाङ्गलता समागात्[3]
तारागणैरिव समं शरदिन्दुलेखा ॥ ४५ ॥

पार्थस्तत्र निलीय दत्तनयनो दिव्योत्सवे कौतुका-
दाळीमध्यगतां ददर्श सुदृशं लावण्यलेखामयीम् ।
कर्षन्तीं जनलोचनानि हृदये हर्षं वमन्तीं पुरः
सैवेयं हरिसोदरीति सुषमाभूम्नैव निर्णीतवान् ॥ ४६ ॥

अचिन्तयच्चैवमानन्दमन्थरेण चेतसा –

निगदिते हि गदेन तदा मना-
गतिशयोक्तिमशङ्कत मानसम् ।

---

१. ' तयश्च मुदा ' छ. ज. झ. ञ. २. ' त्रापि याद ' छ.
३. ' मायात् ' ज. ४. ' पुनः ' ञ.

सुहृदमद्य विलोक्य तु मन्महे
  विरळवाचममुं खलु यादवम् ॥ ४७ ॥

हे मत्प्रियंवद गद त्वमुदारगात्र्या
  रूपामृतेऽद्य विदितोऽसि यथार्थवादी ।
या कापि शैशवकथा कथिता त्वयैव
  तस्यां कथं नु भवितासि सखे न जाने ॥ ४८ ॥

एतावतैव भुवनाद्भुतरूपलक्ष्मी-
  सन्दर्शनेन विजयोऽ[1]द्य कृतार्थजन्मा ।
यद्यस्ति साध्यमपरं स कृपापयोधि-
  र्भूयोऽपि साधयतु मे भगवान् मुकुन्दः ॥ ४९ ॥

इत्यादिचिन्तापरमम्बुजाक्ष्या
  [2]गात्रामृते नेत्रयु[3]गेन मग्नम् ।
पार्थं तमायात् कृतमन्दहासः
  स निःसहायः कमलासहायः ॥ ५० ॥

चित्रं समाधिबलमस्य यतीश्वरस्ये-
  त्यालापिनं हरिमुदीक्ष्य[4] स लज्जितात्मा ।
किं गूहसि प्रियसखेति करे गृहीत्वा
  शंसन्तमेनमवदत् पुनरेष मन्दम् ॥ ५१ ॥

सर्वं वेत्सि त्वमिह करुणाकाळजीमूत यस्मा[5]-
  दानीतेयं न[6]वरसझरी नेत्रसारङ्गयोर्मे ।

१. ' त्र क्र ' क. ट.   २. ' रूपामृ ' ट.
३. ' युगे निमग्ने ' क. ट.   ४. ' क्ष्य विल ' क. ञ. ट.
५. ' तस्मा ' ट.   ६. ' वमधुझ ' क. ञ. ट.

तत्किं वक्ष्ये हृदयमधुना निःसहं मे विशेषा-
देतत्प्राप्त्यै मनुजसुकरं ब्रूहि सर्वं करिष्ये ॥ ५२ ॥

इति वदन्तममन्दानुराग[1]परिपोषमिव नवकाषायमिषेण[2] वपुषि[3] धारयन्तमन्तरान्तरा लतानुप्रविष्टै[4]र्दृष्टिपातैरापीतमाधवीरूपमाधुरीविधुरीकृतमधरीकृतमधुधारया गिरा [5]मधुरिपुरवादीत् ।

एनां कौरवयाचितां हलधरादाकर्णयन्नुद्धवः
प्रोचे संसदि दानमात्रमयशो भूमीपतीनामिति ।
तद्वाञ्छन्त्यखिलाः स्वयंवरविधिं कालातिपाती स ते
तस्मादस्त्वपहार एव विहितो राज्ञां स शूरात्मनाम् ॥ ५३ ॥

*तदत्र हंसाकृतिमेव हि त्वां[7]
नीत्वा पुरीं राममुखैः [8]सपक्षैः ।
बालां मृणाळीमिव हारयिष्ये
किञ्चित् क्षमस्वेह पयोदपीडाम् ॥ ५४ ॥

इत्थमभिधाय निगूढं गतवति यदुपतौ यतिवरोऽपि लाभावगमेन लोभनीयतमां तामेव प्रियतमां सखीभिः सह सखेल[9]सञ्चारिणीममृतं[10]-

* अटपाठयोः श्लोकोऽयं नास्ति ।

१. ' गभरितवरि ' ञ. २ ' कषा ' ग. घ. छ. ज. झ.
३. ' ण धार ' क. ख. ञ. ४ ' पुषा धा ' छ. ज.
५ ' तान्तरानु ' ख. ग. ङ. च झ. ६. ' मुररिपु ' ट.
७. ' त्वा ' ग. घ. ङ. छ. ८. ' सपत्नैः ' ख.
९. ' लचारि ' क. घ. छ., ' लं सञ्चरन्तीं ' च ज
१०. ' तमिव नयना ' ट.

पायं नयनाभ्यामापिबन् क्रमेण च [1]निवृत्तोत्सवे निवर्तमाने [2]यदुवृन्दे[3] महैवारयान्तीं मराळगमनामराळकेशीं मुरारिशासनादिवापहृत्य हृदये निवेशयन् पुनरपि तत्स्मरणशरण एव बभूव ॥

अत्रागतं दयितयात्र सखीजनेन
संभाषितं प्रशिथिला कबरीह नद्धा ।
इत्यादि तस्य[4] पुनरप्यभवन् बहूनि
निर्मानुषेऽपि विपिने नयना[5]मृतानि ॥ ५५ ॥

तावन्नीलनिरन्तरा जलधरा हृद्याश्च विद्युल्लता
हासा नूतन[6]मालतीसुमनसां केकारवाः कोमलाः ।
एकैकं स्मरयन्त एव दयितामिन्द्रात्मजस्याभव-
न्नाश्वासाय नु लोभनाय नु पुनस्तापाय मोहाय वा ॥ ५६ ॥

आलक्ष्य वृक्षविवरेण समुन्नमन्तं
विद्युल्लतान्वितमसौ तरुणाम्बुवाहम् ।
किं माधवीमुपनयन्नुपयाति शौरि-
रित्युत्सुकोऽजनि विमोहवशादकाण्डे ॥ ५७ ॥

मुकुन्दस्योपायैः सु[7]दृशमवगम्यापि सुलभां
मनोवृत्तिं तस्या विशदमविदन् खेदमगमत् ।
अनाश्वास्यं [8]मन्ये गदनिगदितं बाल्यचरितं
प्रवृत्ते तारुण्ये हृदयमपरं नाम सुदृशाम् ॥ ५८ ॥

---

१. प्रवृ ' ट.  २. ' यादवबृ ' ज.  ३. ' न्द्रैः ' ट.
४. 'स्य विजयस्य बहून्यभूवन् निर्मा' छ.  ५. 'नोत्सवानि' घ. छ. ट.
६. ' माधवीसु ' ङ. च.  ७. ' दृढमव ' .
८ ' स्यं मन्ये ' क. झ. ञ.

एवं च योगिनि वियो[1]गदशां प्रपन्ने
वर्षाम्बु पात्रकतया किल पर्यणंसीत् ।
विद्युत्प्र[2]भापि विदधे हृदयान्धकारं
जातिप्रसूनमपि जातिविरोधि जातम् ॥ ५९ ॥

अद्राक्षं पुनरेकदा[3]पि दयितामश्रौपमस्या गिरं
पार्श्वं प्राप्य शनैस्त्रपानतमुखं पश्यामि तस्याः [4]स्मितम् ।
तामालिङ्गितवानहं तनुलतां वक्त्रारविन्दं पुन-
र्मन्दं चुम्बितवानिति स्म स यतिर्नक्तंदिवं दूयते ॥ ६० ॥

भूयोऽपि कृष्णगिरमेव किलावलम्ब्य
प्राणान् वहन् कतिपयानि दिनानि नीत्वा ।
अभ्यागतानथ ददर्श यदुप्रवीरां-
स्तालाङ्कसारणमुखान् स हि दिव्ययोगी ॥ ६१ ॥

*ततः प्रणता[5]नज्ञानप्रशमोऽस्त्वायुष्मतामित्यनुगृह्णानः स्वागति-[6]कश्चासौ [7]महायतिरुपविष्टेषु तेषु स्वयमबलाभि[8]र्मुखाशयोऽपि बलाभिमुखो भूत्वा पुनरभाषिष्ट ।

बलभद्रावलोकेन कृतार्था भिक्षुता[9]धुना ।
किं वा सुभद्रा[10]वगमो नचिरान्मे भवेत्पुनः ॥ ६२ ॥

---

* चपाठे गद्यमिदं नास्ति ।

---

१. ‘ गिदशां ’ च. २. ‘ द्युल्लतापि ’ घ. ट. ३. ‘ दां तु ’ ज.
४. ‘ स्थितं ’ क ख. घ छ ज, ‘ स्थितिं ’ च.
५. ‘ तानिमानज्ञान ’ क. ख. घ. छ ६. ‘ कोऽसौ ’ ट.
७. ‘ मायायति ’ क. ८. ‘ मुखोऽपि ’ ख. ज
९. ‘ ता मम ’ ख. १०. ‘ द्राधिगमो ’ क. घ. ङ. च. ज, ‘ द्राभिगमो ’ ख.

इति पृच्छन्तमेनं यदृच्छया भिक्षुमतुच्छभक्तिभूमा रामोऽपि [1]सामोदमवादीत्—

अद्यातिवृष्टिरहितेऽहनि शैलदेशे
क्रीडारसेन खलु नः पुरतो विसृज्य ।
अन्वक्षमेव समुपेष्यति वासुभद्रः
पूर्वं तु नात्र विदितो भगवत्प्रसङ्गः ॥ ६३ ॥

इत्यभिधाय पुनस्तत्तद्देशगतीरनुयुञ्जानेन रामेण साकं प्रसङ्गवशादलङ्घितधर्मपथा [2]विविधाः कथाः कथयत्यस्मिन् विस्मितेषु वृष्णि[3]वीरेषु कृष्णो[4]ऽपि तदानीमुपगम्य नमोऽस्तु भद्रावहेभ्यो योगिभ्य इत्यभिववन्दे ।

ततश्च संप्रति परब्रह्मांशभूतयोर्द्वयोरप्युपलम्भादवाप्तप्र[5]मोदोऽस्मीति स्थिते यतीश्वरे भृशं[6]कुतूहली हली वृष्णिवी[7]रान्वितः कृष्णमाहूय व्याजहार—

यो[8]जनशतिको भिक्षु-
र्यौगिकधीः सर्ववेदयश्चायम् ।
चतुरो वार्षिकमासान्
वदस्व कुत्रोपवेश्य महनीयः ॥ ६४ ॥

आर्ये तिष्ठति धर्मतोऽत्र परतन्त्रोऽस्मीति कृष्णे वद-
त्यूचे सीरधरः पुरेऽत्र विजनं कन्यापुरान्नापरम् ।

---

१. 'सादरम' छ. २. 'थाः कथाः' ग. ञ. ट.
३. 'वर्येषु' ख, 'वरेषु' छ. ज. ४. 'ष्णस्तदा' ङ. च. ञ. ट.
५. 'प्रमदो' ख. घ. च. छ. ज. ६. 'शं कु' झ.
७. 'वीरान्वि' क. ग. ट. ८. 'योजनशति' छ.

आरामोऽत्र तु योगभूमिरुचिता तत्रैव दुर्वाससं
कुन्तीवैनमभिप्रसाद्य भजतां भद्रं सुभद्रेव सा ॥ ६५ ॥

कृष्णोऽवदद् बहुविदेष युवा सुरूपः
कन्यागृहेऽस्य वसतिः किमु नाभिशङ्क्या ।
मा मैवमच्युत चिरं हि परीक्षितोऽसौ
निःसङ्ग एव नियमीति जगाद रामः ॥ ६६ ॥

एवं चेदार्यो भवन्तश्च प्रमाणमित्यभिदधानो मुकुन्दः कर्मन्दिनमपि मन्दमूचे—

अस्मिन् पुरे विजनभूतलदुर्लभत्वात्
कन्यापुरे वसतिमिच्छति तावदार्यः ।
तत्किं मनोभिलषितं भवतामिहेति
पृष्टो जगाद यतिरस्तु किलेत्युदारम् ॥ ६७ ॥

एनं त्वमेव नगरीं नय बालिकाम-
प्याज्ञापयेति हलिनो वचसैव शौरिः ।
लालाटिकः स खलु कौक्कुटिकं यतिं तं
भामाविदर्भसुतयोर्विदितं निनाय ॥ ६८ ॥

हरिनगरीति सहर्षं
परमोज्ज्वलमणिमयीति साश्चर्यम् ।

---

१. ‘च’ ख. घ. २. ‘न्यापुरे’ ङ. ज. झ. ञ. ट.
३. ‘चनान्मुकुन्दः’ घ.

दयितविभूषितेति
प्रोद्गतपुलकं पुरीं ययौ पार्थः ॥ ६९ ॥

कन्यापुरं तमुपनीय पुनः सुभद्रां
मन्दं जगाद हलिनो वचनं मुकुन्दः ।
प्राप्तो वरोऽत्र यमिनां महनीयमूर्ति-
स्तत्प्रीणनं कुरु कुलस्य तवापि भूत्यै ॥ ७० ॥

इत्थं नियुज्य लतिकाभवने विविक्ते
तस्याधिवासमुपकल्प्य जगाम देवः ।
कन्यानिकेतजुषि योगिनि तत्सहाया
विप्राश्च ते मुमुदिरे यदुराजधान्याम् ॥ ७१ ॥

अथ सा यदुवरकन्या
सादरमादाय सोदरादेशम् ।
चतुरसखीजनसहिता
निनाय तस्मै रसोत्तरां भिक्षाम् ॥ ७२ ॥

तामायान्तीं सविधमतिरम्याङ्गपीयूषधारां
तर्षार्ताभ्यां स खलु नितरामापिबल्लोचनाभ्याम् ।
तृप्तिं भेजे निरतिशयिनीं हृद्यमप्यन्नजातं
तस्य प्रीत्यै समजनि पुनस्तत्कराम्भोजसङ्गात् ॥ ७३ ॥

तस्याः प्रतिक्षणमनोज्ञमलक्ष्यदोषं
सामीप्यतो विशदभङ्गिविशेषमङ्गम् ।

१. 'प्रमदाविभू' छ. २. 'पुरान्तमुप' छ.
३. 'कीर्ति' ज. ञ. ट. ४. 'रतनया' झ. ५. 'बन्लोचनाभ्यां' घ. ६ 'मवेक्ष्य वेषं' ञ. ७. 'परम्यं' ञ.

आपादचूडमवलोकयतो यथेष्टं
भिक्षामयः स विजयस्य महोत्सवोऽभूत् ॥ ७४ ॥

स प्रश्रयो मृदुतनोरुचितज्ञता सा
लज्जाकुलं च चतुरं च विचेष्टितं तत् ।
सोऽप्यादरस्तदपि मौग्ध्यमुदारता सा
सर्वं विमोहनमजायत पाण्डुसूनोः ॥ ७५ ॥

आयाससंश्लथितकुन्तळबन्धनेन
मूर्ध्ना प्रणम्य मुकुळीकृतपाणिपद्मा ।
सा मन्दिरं गतवती कलहंसकान्ता-
मन्दाक्षदानचतुरैर्मृदुपादचारैः ॥ ७६ ॥

इति दिनमनु भिक्षाकर्मणे पक्ष्मलाक्षीं
सविधमुपसरन्तीमापिबन् वीक्ष्य कामम् ।
वपुषि पुनरमुष्याः प्रत्यहं चित्तयोने-
रुदयमथ स पश्यन् प्रापदन्तर्विचिन्ताम् ॥ ७७ ॥

लसति किमपि तस्याः पाण्डुता गण्डमूले
गमनमलसमङ्गे क्लान्तता कान्तता च ।
तदिह नियतमेषा कुत्रचिद्धन्यजन्म-
न्यनुनिपतितभावा किं नु वन्ध्या ममाशा ॥ ७८ ॥

---

१. 'पानयन्ती' ञ. २. 'माश्वसन्' क. ख. ग. घ. ङ. च. ज. ट.
३. 'कामी' छ. ४. 'मपि स' छ.
५ 'ममाशा ञ.

हन्तेयमन्यहृदया यदि तत् कथं मां
कृष्णोऽनुकूलमनुशंसति विश्ववेदी ।
नहि किं बतायमपि नाम स एव भावी
दैवाद् गदाभिहितबाल्यक[1]थाविवर्तः ॥ ७९ ॥

अस्मद्वाञ्छितसाधनातिकुतुकी ना[2]लोचयेद्वा स्वयं
बालाया मतिमच्युतो न च भवेत् सा बाल्यवार्ता स्थिरा ।
किं वा पाण्डुसुतो हरेः प्रियसखः पञ्चेषुणा वञ्चितो
हासस्यास्पदतां गतोऽद्य बत हा कोऽयं विधेः प्रक्रमः ॥ ८० ॥

संदृष्टायां सुदृशि सुगमा भाववार्तेति मत्वा
लज्जावान् न प्रियसख[3]महं पृष्टवानस्मि शौरिम् ।
सम्प्रत्यस्या मयि तु यतिवेषोचिताः संप्रथन्ते
भक्तिप्रह्वा विनयबहु[4]मानावृता एव भावाः ॥ ८१ ॥

तत् किं करोमि निमिषार्धमपि प्रियाया-
स्तत्त्वं विबुद्ध्य चरितार्थमतिः कदा स्याम् ।
अस्याः प्रियोऽहमिति चेदवधारयेयं
विश्वाधिराज्यमपि नैव [5]तथा मुदे मे[6] ॥ ८२ ॥

भिक्षां प्रदाय सुदृशि प्रतियातवत्या-
मित्यादिचिन्तनशतैर्विषसाद पार्थः ।

---

१. 'थाप्रवृत्तः' ज. झ.  २. 'नालोकये' क.
३. 'ममुं पृ' ग. घ.  ४. 'मानोचिता एव' ख, 'मानादृता' ञ.
५. 'तदा' ञ.  ६. 'मे ॥ भक्त्या०' (श्लो० ८४.) ट.

अभ्यागमेषु पुनरस्तमितान्यभाव-
मास्वादयन् प्रणयिनीं प्रमुमोच तापान् ॥ ८३ ॥

सा पुनः,

भक्त्या बाला यतिवरममुं प्रत्यहं पूजयन्ती
दृष्ट्वा तस्य श्रुतनिजपतिच्छायतां किञ्चिदङ्गे ।
गाढोत्कण्ठा भृशतरमभूदर्जुने प्राणनाथे
तुल्यालोके भवति हि मनो वाञ्छितार्थातिमग्नम् ॥ ८४ ॥

पश्यन्ती योगिवर्ये प्रतिदिनविशदामेव पार्थाङ्गभ[1]ङ्गीं
गूढं दृष्ट्वा सखीभिर्मुहुरपि च तथैवेयमा[2]वेद्यमाना ।
अश्रान्त[3]क्लान्ताचिन्तामिळदसुलभताचिन्तनात्यन्ततप्ता
हा[4] हन्तानन्यचित्ता कृशतनुरभवद् वीतनिद्रा[5] सुभद्रा ॥ ८५ ॥

ततश्च,

जाताधिकार्तिमपि चादरमात्रश[6]क्त्या
भिक्षाप्रदानविधिमादधतीं कथञ्चित् ।
तां बलिकामनिशमाळिजनो मनोज्ञै-
राश्वासयत् किल विनोदनकेळिभेदैः ॥ ८६ ॥

ततः कदाचन सखीजनेन विनो[7]दनकाम्यया मनोहरलतापादप-धन्याभोगं कन्यापुरोपवनमुपनीयमानेयमकाण्डलब्धनयनोत्सवं जनित-

---

१ ‘ भङ्गिं ’ ट. १. ‘ मापाद्यमाना ’ झ. ३. ‘ न्तं क्ला ’ क. ख, ‘ न्तं कान्त ’ ग. घ. ङ. च. ज. झ ४. ‘ हा हा सानन्य ’ ट.
५. ‘ द्रा ॥ जाता० ’ ख. ञ. ट. ६ ‘ भक्त्या ’ च. ञ.
७. ‘ दकाम्य ’ ग.

पुळकमुकुळनिचुळिताङ्गलता कुटीरकुहरप्रहितेक्षणे कुतुकाकुले स्थिते कुहनायोगिनि तत इतः प्रसृमरशिलीमुखप्रक[1]रं प्रचलितप्रवाळकरवाळं प्रसारितक[2]नकमुकुळकुन्तमुखं समराङ्कणमिव[3]ाङ्गजस्य त[4]द्देशमविषह्यं मन्यमानापि सखीजनदाक्षिण्यात् तानि तानि ताभिः प्रदर्शितानि[5] विनोदनानि किल विलोकयन्ती मध्ये मध्ये धनञ्जयनिपतितहृदयतया लिखितेवोत्कीर्णेव मुषितचैतन्येव कुसुमलतास्वन्यत[6]मामेव क्षणं निरीक्षमाणा प्रतिक्षणोद्गतदीर्घनिःश्वासा सञ्चरणखेद इति पञ्चशरग्लानिं निगूहमाना कुहचिदुल्लसितर[7]ागां पल्लवावलिं वल्लभवार्तामिव सखीजनोपनीतां कर्णयोराद्रियमाणा क्वचित् प्रियवयस्यया चतुरपरिग्रथितां कुसुममालां वरणमालेयं तवेति सहासं करे समर्पितां सलज्जाखेदमाद[8]दाना, कुत्रचिदत्यन्तक्ल[9]ान्त्या सखीजनेन संवीज्यमाना पुनरपि कमपि कालं समययापनाग्रहाद् व[10]ा सखीजनादराद् वा विजयनयनपुण्यपूराद् वा विजहार ।

परिसरभुवश्च विस्रम्भसंभाषणानि—

सखि! चूतपोतमेतं
जातिलता किं विळम्बते यातुम् ।
किमिह सखि[11]! ते विषादे-
लतिकास्वपि सन्ति मन्दभागिन्यः ॥ ८७ ॥

---

१. ‘ करप्रच ’ छ. २. ‘ तकीमु ’ ख. घ. छ.
३. ‘ वानङ्गराजस्य ’ छ., ‘ वानङ्गस्य ’ ञ. ४. ‘ तमुद्देश ’ ख. च. छ. ज. झ. ५. ‘नि विपिनोदराणि किल’ छ. ६. ‘ तमेव क्षणं निरीक्ष्यमा ’ क. ख. ग. घ. च. छ. ज. ७. ‘ रागं प ’ ख. ८. ‘ धाना ’ घ.
९. ‘ क्लान्ता ’ क. १०. ‘ वा क्वचित् प्रियवचनाग्रहाद् वा सखी ’ ञ.
११. ‘ खि विषा ’ क.

अयि यूथिकां विलोकय
किसलयकरलालितामशोकेन ।
धन्यासि यूथिके त्वं
धृतरागे वल्लभे समीपगते ॥ ८८ ॥

सखि! माधवीयमारा-
दर्जुनमुपयातुमतितरां त्वरते ।
इति कथिता [1]नमितमुखी
तामैक्षत भङ्गुरभ्रुवा दृष्ट्या ॥ ८९ ॥

[2]इत्थं परार्थमपि नाम निजं निशम्य
तस्यास्तथाविधमुदीक्ष्य विकारभेदम् ।
आनन्दसागरनिमग्नमना मुहूर्तं
तस्थौ चिराय विजयश्चरितार्थजन्मा ॥ ९० ॥

एवं च कश्चित् समयं विहृत्य बाला[3]थ खेदालसपादचारा ।
गृहं प्रयाति स्म समं सखीभिः समं च जिष्णोर्नयनोत्सवेन ॥९१॥

दयितानुरागबोधा-
दुदितो विजयस्य यः समाश्वासः ।
अयमेव तत्समागम-
रणरणिकां मनसि शतगुणीचक्रे ॥ ९२ ॥

सा लीला [4]तान्तमङ्गं तत् ता विस्रम्भकला गिरः ।
इत्थं समाधयो भिक्षोः प्रावर्तन्त ततः परम् ॥ ९३ ॥

---

१ 'विनत' ख. ञ. ट  २. 'एवं' ट.
३. 'ला सखेदा' ञ ट.  ४. 'कान्त' ट.

मृगीदृशोऽप्यनुदिनं प्रियोपभ्य[1]प्रकाशनात् ।
विनोदनं परं जज्ञे मुनेरेव विलोकनम् ॥ ९४ ॥

एवं सा कमनीयमत्र कमनीयं तं भजन्ती यतिं
दृष्ट्वा तस्य भुजौ भुजङ्गसदृशौ मौर्वीकिणाङ्कावुभौ ।
पार्थः किं न्वयमेव वेति हृदये शङ्काकुला हन्त मे
वाञ्छामूर्च्छितमेतदित्युपरता लोलाभवत् प्रत्यहम् ॥ ९५ ॥

दिने दिने सा परिवृद्धशङ्का
समेत्य लज्जातरला कदाचित् ।
कथासु तत्त्वा[2]वगमाभिलाषा-
दपृच्छदेनं बहुदेशवार्ताम् ॥ ९६ ॥

सोऽपि देशचरितानि सर्वशो
नर्मभेदरमणीयमूचिवान् ।
सा[3] च तद्वचनकौतुकाच्चिरं
शृण्वती पुनरनिर्णया ययौ ॥ ९७ ॥

प्रियतमासहसङ्कथया [4]ततः
शतगुणार्तिरवर्तत पाण्डवः ।
सु[5]वदना पुनरप्यनुचोदने
सकुतुका त्रपया ववृते चिरम् ॥ ९८ ॥

---

१. 'प्रदर्शनात्' ज. ट. २. 'त्वाभिगमा' च.
३. 'सापि त' ख. ४. 'पुनः' ख. ग. घ. झ.
५. 'प्रियतमा' ज.

तत्तु सल्लपितं [1]तन्व्या तापशान्तिकृते कृतम् ।
तापवृद्ध्यै द्वयोरासीद् दुर्वैद्यस्येव भेषजम् ॥ ९९ ॥

भूयोऽपि निःसहा[2] सेयं कथञ्चिन्मन्दितत्रपा ।
यतिमेत्यैकदापृच्छदाशाक्लेश[3]जिघांसया ॥ १०० ॥

अयि भगवन्!

इन्द्रप्रस्थं किमसि गतवांस्तत्र संबन्धिनी नः
कुन्तीदेवी [4]किमु कुशलिनी नन्दनैर्धर्मजाद्यैः ।
पुत्रस्तस्याः स [5]खलु विजयः क्लिश्यते तीर्थचारै-
स्तीर्थस्नायिन् [6]किमु स भवता वीक्षितो वा श्रुतो वा ॥ १०१ ॥

इति निगद्य किमयं वक्ष्यतीति वेपितहृदयायामवस्थितायां[7] तस्यां क्षणं प्रमोदरुद्धो[8] धनञ्जयः सञ्जगाद—

आर्या पृथा कुशलिनी [9]ननु धर्मजाद्या-
स्तत्सूनवश्च सुखिना विजयस्त्विदानीम् ।
सन्न्यासमेत्य कपटादिह वृष्णिपुर्या-
मास्ते मुकुन्दसहजापरिरम्भकाङ्क्षी ॥ १०२ ॥

इति निशम्य निरन्तरमुन्मिषत्-
पुलकजालवृता नमितानना ।

---

१. 'तस्यास्ताप' क. ज. झ. ट. २. 'हायेयं' क. ट.
३. 'जिहासया' क. ख. ग. छ ४. 'ननु' क. च. ज.
५. 'किल' ग. ङ. ६. 'क्वचन' क, 'किमिह' च, 'स खलु' ग. ङ. ज. ट. ७. 'तायामस्यां' ङ. ज. ८. 'रुद्धकण्ठो धन' ट ९. 'खलु' क. ख. ग. घ. च.

विलिखती चरणेन भुवं क्षणं
स्थितवती च गता च गृहोदरम् ॥ १०३ ॥

ततश्च सा दुर्लभतरवल्लभोपलम्भ[1]तदनुरागावगमजनितप्रहर्षप्रकर्षोदयादुत्कूलिते रागसागरे भृशं परिप्लवमाना मुरहरो वा हलधरो वा यदुजनो वा किं मन्यत इत्यपाय[2]शतशङ्काकुला क्षणमपि[3] च प्रियविश्लेषमसहमाना भिक्षाविधये[4]ऽपि तदुपान्तं गन्तुमक्षम[5]माणा शयितु[6]मासितुमशितुमालपितुं[7] वाप्यरतिशालिनी स्निग्धमणितलेषु तल्पिमेषु[8] च परिवर्तमाना सकलशिशिरोपचाराणां सखीजनवचसामप्यतिभूमिं गता मातरापितृजनस्यापि कातरतामकरोत् ।

ततस्तदुदन्तवेदिमुकुन्दचोदितरुक्मिणीसमुपहृतभिक्षो धनञ्जयोऽपि प्रियावलोकन[9]विनोदन[10]लोपादनुपरोधमदनकदन[11]परिद[12]ह्यमानस्तद्दशामप्यतिवर्तमानां दुर्दशामभजत । ततश्च—

खिन्दानमातृविनिवेदितबालिकार्तिः
सन्तापमप्यधिकमिन्द्रसुतस्य जानन् ।
आप्तैर्मितैः समुपमन्त्र्य रहोविवाह-
माश्वासयत् स्व[13]पितरौ निभृतं मुकुन्दः ॥ १०४ ॥

---

१. 'म्भात्तदनु'. २. 'यशङ्का' घ ज.
३. 'पि प्रिय' ट. ४. 'ये तदु' ग. ५. 'क्षमा शयि' ट.
६. 'तुमशि' ज. ७. 'पितुमप्यगति' ख. ८. 'षु च विपरि' ग. घ. ङ. छ. ज. झ, 'षु परि' ज, 'षु विपरि' ट.
९. 'कनविलोपा' घ. १०. 'नविलो' ख. ग. ङ. च. ज.
११. 'मदनपरिदह्य' क. १२. 'दन्दह्य' ट.
१३. 'सुनिभृतं पितरौ' क. ख. ग. घ. छ. ज. झ.

पुनरप्ययमुपायसागरः सागरशायी यदुसभायामेवमवादीत्—

शान्ता नश्चिरकालमुत्सवरसाः सम्प्रत्युमेशोत्सवे-
द्वीपेऽन्यत्र दिनानि तावदधिकत्रिंशानि रंस्यामहे ।
स्वाभीष्टैर्विभवैः समं यदुजनास्तत्रोग्रसेनादयः
सर्वे यान्तु सुखाय निःसुखरसान् मर्त्यान् पशून् मन्महे ॥१०५॥

इत्यभिहितेषु मुदितेषु सकलभोजवृष्ण्यन्धकेषु सम्भृतसन्नाहेषु[1] सुपृथुसौहृदं विपृथुनामकं निभृतमुदितवान्[2] भगवान्—

सर्वे यान्त्यधुनान्तरीपमपरं त्वं द्वारकानिर्गम-
द्वारे रैवतके निवेश्य पृतनां त्रायस्व तावत् पुरीम् ।
अन्ते क्वापि दिने निरेष्यति पुराद् भद्रां हरन्नर्जुन[3]-
स्तं किञ्चित् प्रतिरुध्य[4] मुञ्च च जवाद् दत्त्वा मदीयं रथम् ॥

इति । ततश्च—

रामादिभिः सह गतो यतिमाह देवः
प्राप्तो महोत्सव इहाम्बुधिमध्यतो नः ।
यामो वयं विजनमित्ययि मास्तु खेदः
सा माधवी ननु वशेऽत्र समर्पिता वः[5] ॥ १०७ ॥

इति[6] । तदनु च—

---

१. ‘ षु पृथुसौ ’ घ. २. ‘ वान् स भग ’ ट.
३. ‘ वहन्न ’ ख. ग. घ. ज. ४. ‘ प्रतिबध्य ’ ञ.
५. ‘ वः जिग ’ ट. ६. ‘ ति ॥ जिग ’ ञ.

जिगमिषुम[1]वगम्य भ्रातरं तापताम्य-
न्ननुरपि तदुपान्तं प्राप्य बाला कथञ्चित् ।
व्रजति सकललोकैः[2] कृष्ण! योगीन्द्रमेनं
कथमिति गुरुलज्जारुद्धकण्ठी जगाद ॥ १०७ ॥

माधवोऽपि सान्तःस्मितं सान्त्वयन्निमामवादीत्—

सम्पादितं ननु यदत्र मया विधेयं
भूयस्त्वमेव भज भीरु यथेष्टमेनम् ।
ज्ञातं त्वया च चिरसंवसनात्तदिष्टं
नास्मासु कश्चिदिव ऊर्ध्वमिहास्ति भारः ॥ १०८ ॥

इति वचसा निजभ्रातुरनुमतिमवगम्य प्रसन्नायां [3]कमन्यः सोऽपि खलु कुरुसिंहकेळीवनायिते पुरे कतिपया[4]नेव रक्षकान् निक्षिप्य रैवतकरक्षिणामत्याहिते सति महाभेरीं निनादयेति सभापालमपि [5]प्रभाष्य सञ्चारितसाञ्चजन्यध्वनिः संचचाल चञ्चलाक्षीसञ्चयैः सह वञ्चनामनुजः ।

ततो हैमहलिकेन नैलाम्बरिकेण[6] रामेण शेखरिताग्रभागा देवकी-रोहिणी[7]प्रमुखस्त्रैणानुगतवसुदेवोग्रसेनप्रमुखराजन्यकराजपुत्र[8]कानुगामि-मानुष्यकसम्मिळितवात्सकवार्द्धकयौवतसर्वतोनिरुध्यमानहरित्तटाः प्रत्येकप्रत्याहृतप्रत्यग्रविविधभूषणाम्बरपेयखाद्यादिसकलपरिच्छदपरि-च्छुरितैः समुच्छ्रितपताकाशतच्छा[9]यापरिच्छादितदिगन्तरैः निरन्तर-

१. ‘ मभि ’ ख. छ. ज.  २. ‘ के कृष्ण ’ ज.
३. ‘ कन्यकायां ’ ख. घ, ‘ कन्यायां ’ ज.  ४. ‘ यान् रक्ष ’ छ
५. ‘ प्रतिभाष्य ’ ज.  ६. ‘ ण भुवनाभिरामेण रामेण ’ ङ.
७. ‘ णीमुख ’ ख. ग. घ. ङ. ज. झ.  ८. ‘ पुत्रानुगा ’ छ.
९. ‘ छायपरि ’ क. ज. झ.

पातिभिः नैकविधनौकासहस्रैः स्थलपथायितजल[1]निधिमार्गाः स[2]ङ्क्षोषिणेनोपेत्य दश[3]सप्तयोजनायामविस्तारे[4]ऽस्मिन् महाद्वीपे तत इतो घटि[5]तपटकुटीसहस्राः कृष्णराम[6]का यदवश्चातुस्त्रिंशद्दि[7]वसिकं छन्दस्योत्सवमुदजुघूषन् ।

तत[8]श्च रहीभूतायां यदुनगर्याम् —

किमपि विगळदन्तःसंज्वरा[9] मञ्जु[10]गात्री
  यतिमभजत गाढ[11]व्रीळिता चोत्सुका च ।
स च गळितनिरोधां वीक्ष्य कान्तां न सेहे
  कुचयुगपरिरम्भे चुम्बने वा विळम्बम् ॥ १०९ ॥

तथा पुनर्द्वित्रिदिनेषु तत्र[12] हि
  व्रजत्सु पर्यु[13]त्सुकचेतसोस्तयोः ।
कदापि तां पार्श्वगतां निशामुखे
  जगाद पार्थो मदनार्तिमूर्च्छ[14]या ॥ ११० ॥

नाथे माधवि! मन्मनो न सहते दूरे च नौ बान्धवा
  गान्धर्वं विधिमेव मानय ततस्त्रायस्व मे जीवितम् ।
मैत्रो नाम मुहूर्त एष शुभदः प्राप्तश्च किं मन्यसे
  नो चेदद्य कृशाङ्गि मन्मथहतो हा हन्त कुन्तीसुतः ॥ १११ ॥

---

१. ‘ लधि ’ ञ.  २. ‘ संघोषणेनो ’ ञ. ‘ साघोषेणोपे ’ ट.
३. ‘ शसहस्रयो ’ क.  ४. ‘ रे मद्वा ’ ञ.  ५. ‘ तविविधपट ’ ङ.
६. ‘ मौ यद ’ ख, ‘ मकादयो यद ’ च.  ७. ‘ वसकमुत्सवमुदमुद ’ ट.  ८. ‘ ततो रही ’ ञ.  ९. ‘ संज्वरा ’ ञ.
१०. ‘ चजुंगा ’ ज.  ११ ‘ ढं व्रो ’ ङ. झ.  १२. ‘ तेषु हि ’ ञ.
१३. ‘ पर्याकुलचे ’ क.  १४ ‘ मूर्च्छिता ’ क. झ.

इति निशम्य गिरं दयितस्य सा
   स्वजनभीरुरवेपत चेतसा ।
नतमुखी च विधेयमजानती
   स्थितवती कलिताश्रुभरा दृशोः ॥ ११२ ॥

सा भ्रातरं भुवनसाक्षिणमेव तावत्
   सस्मार सम्भ्रमविषादभया दयालुम् ।
पार्थोऽपि तद्विवशतामव[1]लोक्य धीमा-
   नन्तश्चिचिन्त पितरं त्रिदशाधिनाथम् ॥ ११३ ॥

तावन्मर्त्या[2]न्धनिद्रायितमुसलिमुखान् वञ्चयन् वल्लभाभ्यां
   द्वाभ्यां मातापितृभ्यां त्रिचतुरयदुभि[3]श्चागतो वासुदेवः ।
इन्द्राण्या साकमिन्द्रोऽप्यमरमुनिगणैरप्सरोभिः समागात्
   प्रत्या[4]सैर्दिव्यभाभिः शिव शिव दिवसम्मन्य आसीन्निशीथः ॥

ततः प्रमोहार्णवादुत्तीर्य प्रमोदार्णवावतीर्णयोः सुभद्रापार्थयोः परस्परमङ्ग[4]मपरिप्रीतेषु हरिप्रेय[5]सीमुखदिव्यमानुषजनेषु समो[6]दसम्भारमम्भोरुहाक्षसम्भाविते दम्भोळिपाणौ सम्पादितक[7]न्याप्रार्थनकृत्ये स्वप्रियसुतं सप्रहर्ष[8]मालिङ्ग्य दिव्यलोकाहृतमणिमुकुटकटकाङ्गदहारदुकूलाद्यैः स्वयमेव विभूषितवति शाश्वततपसि काश्यपमुनौ[9]वाश्रितहोमकर्माणि कर्मसाक्षिषु च नारदा[10]दिषु कुशलत[11]मरम्भादिरम्भोरू[12]साहितया

१. ‘ वागम्य ’ क.    २. ‘ द्यार्धनिद्रा ’ ट.
३. ‘ भिः संग ’ ञ.    ४. ‘ ङ्गपरि ’ क.    ४. ‘ सीप्रमुख ’ ज.
५. ‘ षी ’ ञ. ट.    ६. ‘ दभर ’ ञ, ‘ दभार ’ ट.
७ ‘ कन्यकाप्रा ’ ग. ट.    ८. ‘ म ’ क. ट.    ९. ‘ नावुपा ’ ट.
१०. ‘ दादिमुनिषु कुश ’ ट.    ११. ‘ तररम्भा ’ ट.
१२. ‘ रु ’ घ. छ. झ. ञ. ट.

जम्भारिदयितया निज[1]भूषण[2]विभूषिताङ्ग्याः स्वकान्त्या सुरसुन्दरीबृन्दमपि मन्दयन्त्याः समनुरुन्धदरुन्धतीप्रमुखमुनिप्रियाजनसमानीताया जगन्नाथसोदर्याः कुरुकुललक्ष्मीनिवासाम्बुजं कराम्बुजं संजगृ[3]हे स[4]कौतुकानन्दो महेन्द्रसूनुः ।

सौवस्तिकाः सुरमुनिप्रवरास्तदानीं
रम्भाशचीप्रभृतयश्च सखीविधेये ।
देवेश्वरो घटयिता भुवने[5]श्वरोऽपि
दाम्पत्यमेतदिह नै[6]न्वगणेयभाग्यम् ॥ ११५ ॥

पूर्वं शचीमघवसङ्घटनात् परस्ता-
न्ना[7]लोकिता वरवधूरुचिरीदृशी नः ।
इत्थं प्रशंसनपराः सुरसिद्धसङ्घा-
स्तस्थु[8]स्तदा नयनपूरितहर्षबाष्पा[9]ः ॥ ११६ ॥

एवमभूतपूर्वे वृत्ते नातिविदिते विवाहोत्सवे,

शक्रोऽसौ चिरदृष्टपुत्रविरहक्लेशात् कथञ्चिद् ययौ
पुत्रं द्रक्ष्यसि खाण्डवे ध्रु[10]वमिति स्मेरोऽगमन्नारदः ।
गोविन्दोऽपि सखे वसन्निह सुखं गच्छोत्सवन्ते रथी
चापी द्रक्ष्यसि मां कुरुष्विति वदन् द्वीपं गतः सुप्तवान् ॥११७॥

---

१. ‘ जाविभू ’ क. ख. ग. घ. ङ. च. छ. २. ‘ णभूषि ’ ज.
३. ‘ हे महे ’ ञ. ४. ‘ सकुतु ’ क. ख. छ. ट.
५. ‘ श्वरश्च ’ क. घ. ञ. ६. ‘ नावगणेय ’ छ.
७. ‘ न्नालोचिता ’ छ. ८. ‘ स्थुर्मुदा ट. ९. ‘ ष्पाः ॥ शक्रो० ’ घ. १०. ‘ द्रुतमि ’ ङ. च. ज. ञ.

एवं नाम कृतार्थयोरविरहः कन्यापुरावासिनो-
राळीलाळितयोस्तयोः स ववृधे लज्जाविमिश्रो रसः ।
यस्मिन् नूतनमेव जातमखिलं यत्र क्षणा* वासराः
प्रत्यासन्नविवाह एव परमो यस्मिन्नभूदुत्सवः ॥ ११८ ॥

वक्त्रालोकनकौतुके नतमुखीमालापलीलारस-
प्रस्तावेषु च मुग्धहासकलिकामात्रेण दत्तोत्तराम् ।
आश्लेषे सदये मनागिव तनुं व्यावर्तयन्तीमसौ
त्रैलोक्येऽपि विलोभिनीं प्रियतमामानन्दवानन्वभूत् ॥ ११९ ॥

क्रमेण विगळत्त्रपां किमपि दत्तकण्ठग्रहा-
मसंवृतकुचद्वयामनपनीतबिम्बाधराम् ।
स्वयं प्रतिदिनं पुनर्मदनशासने वर्तिनीं
निशासु स यथासुखं समनुभूतवान् माधवीम् ॥ १२० ॥

एवं प्रतिकलं तत्र वर्धमाने स्मरोत्सवे ।
महोत्सवस्तु वृष्णीनां प्रायशोऽवधिमाययौ ॥ १२१ ॥

तावत् प्रस्थानकाम्यत्प्रियतमवचसा राजपुत्री व्रतान्त-
व्याजादाराद्धविप्रा रथमिषुभरितं प्राग्रहीदौग्रसेनम् ।
सूताभावादथास्मिन् किमपि परवशे शौरिणा शैशवेऽहं
सारथ्ये शिक्षितास्मीत्यवददियमयं विश्वभर्त्रे ननाम ॥ १२२ ॥

* इत आरभ्य १२३ तमश्लोके ' रथे ' इतिपर्यन्तो भागः घपाठे नास्ति ।

१. ' वृते ' क. ख. ग. घ. ङ. ज. २. ' सभये ' क.
३. ' विमोहिनीं ' च. ज. झ. ४. ' प्रणयिनीं ' क. ख. ग.
५. ' थारसं ' ग. ६. ' रसोत्स ' ग. ७. ' राध्य विप्रान् रथ ' छ. ट.

ततश्च,

बिभ्राणं शक्रदत्तं मणिमकुटवरं कान्तया यन्तुमन्तं
सख्या चाधूतबालव्यजनमथ रथे वीक्ष्य पार्थं[1] प्रकाशम् ।
भद्रे भद्रासि वीरप्रवरवरणये[2]त्यङ्गनौघे सघोषे
कन्यागेहात् प्रतस्थे झटिति जलधरक्रन्दनस्यन्दनोऽयम् ॥

गृहीताभिहतेति गोपुरमुखात् संप्रेक्ष्य रक्षाभटान्
धारावर्षमवर्षदेष परितो निःशङ्कगामी शरान् ।
साले गोपुरवेदिषु ध्वजशते वृक्षेषु लक्षोत्तरं
प्रोत्खाता विशिखा भयार्दितजना गात्रं न किञ्चित् क्षतम् ॥

एवं निरुच्छ्वसितमूर्च्छितै[3]रक्षिलो[4]के
प्रक्षोभ्य सर्वमभिरैवतकं गतेऽस्मिन् ।
वीरेषु केऽप्यनुसृताः किल तस्य किञ्चित्
सिंहाव[5]लोकितवशेन परा[6]द्रुताश्च ॥ १२५ ॥

ततो[7] रैवता[8]द्रिपथमारोहन्तम्

अमुं सुभद्रासखमात्तचापं
रथोद्गळद्गर्जितघोषिताशम् ।
सचापमम्भोदमिवापतन्तं
न सेहिरे ते गिरिपाल[9]सिंहाः ॥ १२६ ॥

---

१. 'कृतार्थम्' ट, 'प्रकाशे' छ. २. 'त्यात्तघोषे जनौघे' ज.
३. 'तसर्वलोके' ख. ४. 'लोकं' ञ.
५ 'वलोकनवशेन' छ. ञ. ६. 'विनिद्रु' ञ, 'परिद्रु' ट.
७. 'ततश्च रैवतकाद्रिमा' ट. ८. 'ताद्रिमारो' ञ. ट.
९. 'लसङ्घाः' ख.

तत्र च ससिंहनादमुत्क्षुभितेषु तेषु सैन्येषु निराकुला मुरारि-सोदरी दयितमेवमवादीत्

पार्थस्य युद्धेऽपि यथा नियोक्ष्यसे
रथं तथा शिक्षय माधवीति माम् ।
जगाद बाल्ये स हि मे सहोदर-
स्तदद्य युद्धे तव कौतुकिन्यहम् ॥ १२७ ॥

इत्थं प्रियानिगदितो मुदितोऽयमूचे
सम्पूरयामि तव कौतुकमम्बुजाक्षि ! ।
योत्स्येऽद्य दारुणतरं न च हन्मि सेनां
धानुष्कतां मम विलोकय चोदयाश्वान् ॥ १२८ ॥

इति गदितया तया प्रचोदितेषु हयेषु प्रळयसलिलप्रवाहप्रायं पुरतः प्रतायमानैरानन्तर्यौघसहस्रैर्विमुक्तशक्त्यृष्टितोमरकळम्बकङ्कदम्ब-कनिरन्तरीकृते दिगन्तराळे धनञ्जयोऽपि निजभुजदण्डकुण्डलितचण्ड-कोदण्डहिण्डितशरषण्डखण्डितसकलास्त्रमण्डल एव प्रत्येकं प्रत्यर्थि-वीरानपि शरशतैः समावृणुते स्म ।

दृष्टा येऽर्धपथस्पृशः प्रकटितज्याबन्धमोक्षाश्च ये
ये चापेषु समर्पिताः करतले सन्धित्सया ये धृताः ।

---

१. ‘ सिंहनादसमुत्क्षुभि ’ क. छ. झ. २. ‘ मुररिपुसोद ’ ट.
३. ‘ युद्धेषु ’ ञ. ४. ‘ तो यथेष्टं ’ ञ. ५. ‘ ति निग ’ ञ.
६. ‘ म्बकदम्बनिर ’ छ. ७. ‘ ळे जिष्णुरपि ’ ङ.
८. ‘ ताखण्डास्त्र ’ ङ. ९. ‘ वृण्वन् p 40. l. 3 युगबन्धखण्डन ’ ग. घ. ङ च. छ. ज, ‘ वृण्वन् उग्रबन्ध ’ झ.

तूणीरादसमग्रकृष्टवपुषो ये च द्विषां सायकाः
छिद्यन्ते स्म शरैरनेन रभसा ते ते तथैव स्थिताः ॥ १२८ ॥

अनन्तरं च युगबन्धखण्डनस्वस्थकायरथ्यतुरङ्गान् शकलितध्वजवरूथरथाङ्गशताङ्गान् इषुदण्डपोथनपातितसादिनिषादिवीरान् विशीर्यमाणपर्याणकुथानपि तुरङ्गमतङ्गजसङ्घान् पदातीनपि तत इतो दलितनिपतदुरस्त्रशिरस्त्राणश्रेणीन् कटकवलयकुण्डलखण्डनखणत्कारखेदितकर्णपुटान् खाडिति खण्डितखड्गलतांस्त्रुडिति त्रुटितचापतोमरानक्षतशरीरमात्रशेषानकरोन्महावीरः ।

[3]विकीर्णभूषामणिशोणभासं
शिरस्त्रवर्मादिदुकूलखण्डाम् ।
अशोणितामप्यवनिं समन्तात्
सशोणितेति भ्रमयाम्बभूवुः ॥ १२९ ॥

अन्योन्यपाटवालोकप्रमोदगलितत्रपौ ।
आलिलिङ्गतुरुन्मुक्तरश्मिचापौ वधूवरौ ॥ १३० ॥

ततश्च,

सारथ्यखेदालसगात्रवल्ली
सा बाहुमंसे विनिवेश्य सख्याः ।
प्रियेण सत्पल्लववीज्यमाना
क्षणं रथान्ते निषसाद तन्वी ॥ १३१ ॥

---

१. ‘ सात् ते ’ क.　२. ‘ थनिपा ’ छ.　३. ‘ प्रकीर्ण ’ क.
४. ‘ दविगळत्रपौ ’ अ.　५. ‘ त्रयष्टिः ’ ख.

तदा त्रिपृथुरागतः समुपगुह्य तं मानयन्
प्रशस्य रणनैपुणीमदिशदच्युतस्यन्दनम् ।
प्रसिद्धहयशालिना मणिरथेन तेन द्रुतं
जगाम स च पाण्डवो यमितसैन्धवः कान्तया ॥ १३२ ॥

तदनु च,

विजित्य नः पर्वतदुर्गपालकान्
कुरूत्तमो[1] यात्यपहृत्य माधवीम् ।
इतीरितो मङ्क्षु भटैः सभापति-
र्जघान भेरीं प्रळयाम्बुदस्वनाम्[2] ॥ १३३ ॥

ततः कर्णरूक्षभेरीरवाकर्णनसरभसौपहस्तित[3]सामिभुक्तपेयखाद्यादिसम्भारेषु[4] जृम्भितामर्षप्रकर्षविकर्षित[5]नौकासहस्रक्षणलङ्घितोत्तीर्णमहार्णवमार्गेषु त्वरावशात् पार्श्वगोपुरेण प्रविश्य सभामुपधावितेषु सभापतिनिवेदितदुश्च्यवनसुतदुश्चेष्टितश्रवणसम्भूय[6]स्यद्रोषभारात् सम्भूय समुत्पतत्सु सकलै[7]वृष्ण्यन्धकयदुवीरेषु आद्रवत प्रहरतां[8] गृह्णीत बध्नीतां[9] लुनीत मृद्नीतां[10] कृन्धि[11]विचक्षणां कृन्तविचक्षणां च घोषणां कुर्वत्सु कवचः कवचो धनुर्धनुरिति वादिषु रोषाक्रान्तोऽपि स्वयं सीरपाणिर्माशब्दिको भूत्वा बभाषे—

---

१. 'रूद्वहो छ. ञ. ट. २. 'यार्णवस्व' ञ.
३. 'सापतित' क. ४. 'षु विजृ' ख. ङ.
५. 'मर्षविकर्षित' घ. ६. 'म्भूतरोष' ट
७. 'लभोजवृ' क. ड. छ. ज. झ. ८. 'रत' ट.
९. 'त' ट. १०. 'त' ट. ११. 'कृन्धीति विचक्षणां घोष' ट.

सर्वे तिष्ठत वृष्णयो मधुरिपुं पृष्ट्वैव कुर्मोऽखिलं
कृष्ण! क्वासि पुरस्त्वया कथमिदं नालोचितं धीमता ।
ज्ञात्वा वाथ निगूहितं कथय मे सत्यं श्रुते त्वन्मते
कन्याचोरममुं खलं हलमुखप्रोतं करिष्याम्यहम् ॥ १३४ ॥

एकेन वा किमिह पाण्डवकीटकेन
भीमादयोऽपि मुसलाभिहतिं सहन्ताम् ।
दुष्कौरवापशदधिक्कृतिदीपितात्मा
निष्कौरवां धरणिमद्य बलः करोति ॥ १३५ ॥

इति वदतस्तस्यैवानुवदमानेषु परस्सहस्रेषु यदुषु सस्मितमुखो जगाद वासुभद्रः -

सम्भूयैव पुरीं स किं न गमितो नाहं प्रमाणं तदा
पश्चादुत्सविनः सहैव हि वयं किं नान्तरीपे स्थिताः ।
तत्किं पृच्छसि मां ध्रुवं स विजयो याच्ञाविधौ लज्जितः
प्रत्यक्षाहरणे[2] च बन्धुकदनाशङ्की जहार छलात् ॥ १३६ ॥

तदेत्य सम्मानयताशु पाण्डवं
पराजयादत्र वरं तदेव वः ।
इतीरिता अप्यनतिक्षतक्रुधः
सम्मानसङ्ग्रामसमं प्रतस्थिरे ॥ १३७ ॥

श्रुत्वा प्रस्थानभेरीं पथि कुरुवृषभः सोऽपि वीरस्वभावाद्
रोषाक्रान्तो बभाषे कुरुमहिषि रथं तूर्णमावर्तयेति ।

---

१. 'रा त्वया' ट. २. 'णेऽपि ब' ट.
३. 'समान' छ. ञ. ट.

[1]भीमत्वा वृष्णिपुत्र्या चरणनिपतनात् सान्त्वितः शान्तरोषः
कान्तामारथ्यधावत्तुरगरथजवादाशु दूरं प्रपेदे ॥ १३८ ॥

ततः ससन्नाहाः पौरस्त्यगोपुरसरण्या[2] विनिःसरन्तो हलिपुरःसरा यदवः श्येनयागमिव शरगणास्तीर्णवेदिभागं, पुष्पसमयमिव शिलीमुख[3]पूरितमालं, विष्णुरथमिव[4] पत्त्रिवराक्रान्तकेतुदण्डं, विशिखात्मकमपि[5] [6]सकलविशिखाप्रदेशं, सर्वतः शरलक्षलक्षीकृतमपि रक्षिजनदर्शितविलक्षमात्रं, गोपुरदेशमत्यतिविस्मापनम[7]मालोक्य हरिवचसि किमपि जातप्रतिपत्तयः पुनरपि रैवतकान्तमासरन्तस्तत्र च शरशकलित[8]शताङ्गशतसकलनन्नदन्तु[9]रितान्तराम्[10], अन्तरान्तरा कुन्तखड्गशतनिशातशकलसञ्चय[11]दुःसञ्चराम् उपर्युपर्यापतितपर्याणपट्टोष्णीषकवचखण्डकोमलनया जयश्रीकेलिशय्यासमानाम्, अमांसशोणिताम्, अदृष्टश्रुतपूर्वा[12]माहवभूमिमालोक्य विस्मयबहुमानप्रशान्तरोषभारा विपृथुनाप्युपगम्य दूरंगतो[13]ऽधुना कौरव इत्यावेदिता हरिवचनं हरितनयमपि मनसा मानयन्तो गर्वात्ययसव्रीडचेतसः सर्वे[14]ऽपि सान्तस्मितमाधवाधिष्ठितां कुशस्थलीमिव प्रतिपेदिरे[15]।

एवं वृन्दे यदूनां गतरुषि समनुज्ञापयन्नुग्रसेनं
सार्धं सङ्कर्षणाद्यैः सकलयदुवरैः सत्यभामासमेतः।

---

१ 'भीम' ञ. २. 'ण्या नि' झ. ३. 'खप्रपूरि' ञ. ट.
४. 'व पतत्रि' ट. ज. झ. ५. 'कमिव स' ग. ञ, 'कमेव स'
क. ख. घ. च. छ. ज. झ. ६. 'सर्वविशि' ञ. ट.
७. 'नमवलो' ग. ज. ८. 'शखशक' ख. ग. घ. छ.
९. 'लदन्तु' ट. १०. 'तामन्तरान्तरा' छ.
११. 'लचय ञ. १२. 'तरूपामा' क. ग. घ. ज. झ.
१३. 'दूरं ग' ज. १४. 'सोऽपि' ज. १५. 'प्रपे' ग. छ.

सैन्यप्रक्षोभिताशो बहुहरणधनाक्रान्तचक्रीवदुष्ट्री-
चक्रैश्चक्री स शक्रात्मजनिजभगिनीमाननार्थं प्रतस्थे ॥ १३

पार्थश्चासौ लङ्घिताध्वा सुखेन
क्रोशे पुर्याः प्राप्य गोपालवाटीम् ।
मार्गश्रान्तिं शान्तिमानीय कान्ता-
मूचे किञ्चित् सान्त्वयन्नङ्कशय्याम् ॥ १४० ॥

कल्याणगात्रि शृणु मा खलु पार्षती त्वां
सद्यो मया सह गतां न सहेत नूनम् ।
पूर्वोदितं च हृदि मुञ्चति सा न किञ्चित्
तद् गोपिकाकृतिरुपेत्य च मानयैनाम् ॥ १४१ ॥

इत्थं प्रियेण गदिता वरवर्णिनी सा
पीताम्बरस्य भगिनी धृतपीतचेला ।
गोपीजनैः सह गता खलु याज्ञसेनीं
प्रेष्यास्मि ते यदुसुतेति मुदा ववन्दे ॥ १४२ ॥

सम्प्रीतयापि च तया बहुलम्भिताशीः
सम्प्राप्य साथ च ननाम पितृष्वसारम् ।
प्राप्ता मुकुन्दसहजा किल पार्थपत्नी
पार्थेन साकमिति तत्र महोत्सवोऽभूत् ॥ १४३ ॥

पार्थो वल्लववाट एव मिळितः कृष्णादिवृष्णीश्वरै-
रिन्द्रप्रस्थमगात् समर्हणवलत्सोदर्यपर्याकुलम् ।

---

१. 'पदौ व' ट.

किञ्च श्रीधरदत्तयौतकधनैर्नागाश्वरत्नादिभिः
पूर्वस्माद् ववृधे शताधिकतरं तत् पाण्डवानां पुरम् ॥ १४४

तत्र च पुरे सुहृत्सम्भावनमहोत्सवमयेषु बहुषु दिनेषु गतेषु,

बलमुखयदुमण्डले प्रयाते
वसति च तत्र हरौ स शक्रसूनुः ।
यदुवरसहजाकुचाङ्कुरे च
द्रुपदसुताकुचमण्डले च रेमे ॥ १४५ ॥

इति सुभद्राहरणप्रबन्धः ।

# राजसूयप्रबन्धः

श्रीनारायणभट्टविरचितः ।

*गोविन्दमानन्दरसैकसान्द्र-
मावन्द्य नारायणभूसुरेन्द्रः ।
निर्माति धर्मात्मजराजसूय-
सम्पन्मयं सम्प्रति चम्पुकाव्यम् ॥ १ ॥

कामं भीमार्जुनाद्यैरजितपृथुमहोवर्धितैरुद्धृतानां
पृथ्वीशानां जयेन प्रसभमुपहृते निस्तुले वित्तराशौ ।
तद् वृत्तं धर्मसूनुः सपदि परममित्राय भर्त्रे यदूना-
मावेद्य व्यासमुख्यैः सममभृत परद्रव्यवद् द्रव्यभारम् ॥ २ ॥

भगवानपि भुवनानुग्रहैकदीक्षितः सतत[1]त्रीक्षि[2]तनिखिलवृत्तान्तोऽपि तदुदन्तनिशमनानन्तरमेव निखिलात्मकस्य स्वस्यैव वरिवस्याहेतोरधिकदुःसाधस्य समस्तामरमुनिमनुजस्तोमसम्प्रीतिसम्भावनीयस्य मखतन्तुप्रवरस्य संसाधनमिषेण तत इतः समामिळितबहुतरसुकृतोत्तरजननयनहृदयेषु चिदानन्दामृ[3]तरसलहरीं [4]विकरीतुमनाः सकलहरिदन्त[5]-

---

* ' गघपाठयोः पद्यमिदं नास्ति ; चपाठः तृतीयपद्यप्रभृत्येवारभ्यते ।

---

१. ' तं त्री ' ग. घ.
२. ' तसकलवृ ' ट.
३. ' तलह ' ट
४. ' वितरी ' ख. ग. घ. ज.
५. ' न्तरस ' ख. ग घ.

सन्ततां विभूतिमुपसंहृत्य पाण्डवपुरमेव मण्डयन्तीं महालक्ष्मीं वासकसज्जिकामिवाभिसर्तुकामस्तथाविधमहोत्सवसमुचितवेषभूषादेदीप्यमानयदुनृपसुतपृतनाशतावृतमपरिकरसकलमहिषीगणपरिवीयमाणः सुरपुरदुर्लभनिजलक्ष्मीहल्लोहलतुल्यविभवं पृथुतरपृथासुतप्रणयभारसमुचितम् अतुलमणिगणबहुळम् अतिविविधमुपदापदार्थसार्थम् उद्वाहयन् कुशस्थलीपुरस्थलादभिप्रस्थाय हरिप्रस्थनगरीमभूतपूर्वपरमाडम्बरोचितवादित्रादिघोषसम्पदाकम्पितभुवनावकाशः समाससाद ।

कुतूहलसमाकुलैस्तदनु शुश्रुवे पाण्डवै-
श्चिराय परिवाञ्छितः स खलु पाञ्चजन्यध्वनिः ।
मुरारिसुषमाझरीममृतपायमापास्यतां
विरोधि दुरितं नृणां पुरत एव धून्वन्निव ॥ ३ ॥

तदा[2] च द[3]रोदरोदीर्णपुरोदरापूर्णगभीरमधुरनिनादविचालितकूलङ्कषकुतूहलाकुलितहृदन्तरैर्निरन्तरमधिरूढसौधाङ्कणतुङ्गगोपुरसालैः पुरीगतनरपुरन्ध्रीजालैरापादचूडमापीयमानतापिञ्छमञ्जरीमञ्जुलकान्तिपीयूषभूमा चामीकरश्यामीकरणनिपुणसुषमाभरसुषमाङ्गभङ्गितरङ्गिताभिराममञ्जुलमणिशिबिकासमारूढाभिः षोडशसहस्राधिकवल्लभाभिरुल्लसितोपशल्यश्चटुलतटिल्लतापरीत इव तरुणाम्बुवाहः कनकलतिकानिकरपरिगत इव सुरलोकशाखी विपुलबलकदम्बडम्बरविजृम्भितरेणुनिकुरुम्बसम्बाधनिपीताम्बरः पीताम्बरः पाण्डवहृदयमिव विशालसुभगतरं नगरप्रवरं प्रविवेश ।

---

१. 'तः सप' घ.
२. 'तदनु दरो' च, ततश्च दरो' ज,
३. 'दरोदीर्ण' क.
४. 'रसमधि' ञ. ठ. ढ.
५. 'षधामा चा' च
६. 'माभरभङ्गि' च
७ 'तापरिवीत' छ.
८. 'कापरि' च.
९. 'म्बाडम्ब' क. ञ. ट.
१०. 'श। चित्रं भो०' च.

तत्र च वर्तमाने मर्त्योत्तमवेषस्य नित्येश्वरस्य तत्तादृशमत्तकाशिनीगणैः समं प्रत्यासीदतः प्रत्यग्रदर्शनमहोत्सवे,

चित्रं भो रूपमासां बत पुनरमुना सङ्गमे भाग्यसीमा
सर्वागारेष्वजस्रं [1]किल रतिजनको हन्त सौभाग्यभूमा ।
पश्येमाः पश्य शौरिं शिव शिव भुवनानन्[2]दनं कान्तिसीम्ना
दिष्ट्या दृष्ट्योरवाप्तं फलमिति सुदृशां प्रोद्गता वाग्विलासाः ॥४॥

आसामेकापि नाकारिषि बत किमहं भाग्यपात्रं विधात्रा
हा हन्तैतत्पदाब्जद्वयमपि कु[3]चयोरेकदा योजयेयम् ।
स्वप्नेऽप्येनं कदा वा दृढतरमुपगूहामि हा मे दुराशा[4]
कृष्णस्यापीय रूपामृतमिति महिला मोहमाहन्त याताः ॥ ५ ॥

ततश्च सम्भ्रमप्रमोदताण्डवितहृदयैः पाण्डवेयैः व्यासधौम्यपुरोगैः [5]सम्यगभिगम्य सम्मानपूर्वकं पुराभ्यन्तरमुपनीते समस्तहरित्तटाहृतप्राभृतप्रकरपरिहासिनमिव मुक्तामणिप्रचुरं वित्तराशिं दत्तवति विलसदष्टापदविष्टरनिविष्टे विष्टरश्रवसि परिहृष्टपार्षतीमाधवीसाधुतरमाननसमानन्दितासु विशालमणि[6]शालाशतनिवेशितासु स्वपुरीनिवासा[7]दपि प्रसेदुषीषु परमपुरुषमहिषीषु यथासु[8]खनिवेशितासु च यदुपृतनासु,

असूर्यमिव सूर्येण निवातमिव वायुना ।
अतोयमिव[9] वर्षेण हरिणा तत् पुरं बभौ ॥ ६ ॥

---

१. ‘ खलु ’ ग. ट.
२. ‘ न्द्दकं का ’ क. ग. घ. च. झ.
३ ‘ चायोरन्तरे यो ’ च.
४ ‘ शां ’ ट.
५. ‘ समभिगम्य ’ ट.
६. ‘ शालानिवे ’ च. ‘ शालशत ’ ब. ङ. ठ.
७. ‘ दतिप्र ’ च.
८. ‘ खं निवे ’ ख. छ. ञ.
९. ‘ व तोयेन ह ’ च. ठ. ढ.

सुखोपविष्टं भुवनप्रकृष्टं पुमांसमेत्य स्वजनाभिजुष्टः ।
नृपो निविष्टोऽस्य पदाब्जमूले स्वयं गरिष्ठां गिरमाबभाषे* ॥७॥

वित्तं देव भवत्कृपार्जितमिदं कृत्स्नं त्वयि प्रार्पितं
युक्तं तद् विनियुज्यतां तव कलारूपेषु देवादिषु ।
कर्तव्ये[1] च नियुङ्क्ष्व भृत्यमयि मां द्रष्टासि सर्वं प्रभो
कर्ता कारयिता प्रसीदसि फलं दत्से च निःसंशयम् ॥ ८ ॥

उक्तवन्तमिति भक्तवत्सलः
श्रावयन्नथ सभासदो जनान् ।
व्याजहार दशनांशुमण्डल-
व्याजहारशबळीकृताकृतिः ॥ ९ ॥

धर्मात्मन् भवता जिता त्वयि परं जागर्तु[2] लक्ष्मीरियं
त्वां कर्तारमुपेत्य सोऽद्य लसतु श्रीराजसूयाध्वरः ।
मामाज्ञाकरमेव ते विजयवद् विज्ञाय यज्ञोद्यमं
कुर्वीथास्त्वमदृष्टपूर्वविधया तं साधयिष्याम्यहम् ॥ १० ॥

इत्थं वादिनि विश्वनेतरि भृशं पार्थः कृतार्थीकृत-
स्तद्वाचा प्रजिघाय भूसुरनृपव्रातेषु दूतोत्करान् ।
प्राप्तानामिह सार्धवत्सरसुखावासक्षमानालयान्
क्षिप्रं कल्पयितुं[3] च शिल्पिनिवहानल्पेतरानभ्यधात् ॥ ११ ॥

---

* इतः परं चपाठे ' ये भूपा० ' श्लो० १५. इति परं दृश्यते ।

---

१. ' व्येषु नि ' ख. ट. ' व्यं च ' ग. घ. झ
२. ' र्गति ल ' ञ. ठ
३. ' कारयितुं ' ज.

तद्वचःश्रवणसत्वरोद्यत-
क्षिप्रकारिबहुशिल्पिवैभवात् ।
निष्ठितैत्र[1] ददृशे गृहावली
विष्टपाळिरिव विष्णुवैभवात् ॥ १२ ॥

संप्राप्तो[2] नकुलोऽथ हस्तिनपुरीं प्रज्ञादृशं तं नृपं
भीष्मद्रोणकृपादिकान् प्रमुदितान् कर्णान्वितान् कौरवान् ।
सर्वानादरपूर्वमानयदसौ राजापि संम्मानय-[3]
न्नेनानेधितसाधुभोगविभवेष्वावासयद् धामसु ॥ १३ ॥

वृष्णीन्द्राश्च बलोग्रसेनवसुदेवाद्याः समग्रादराः
संप्राप्ताः शिशुपालपौण्ड्रकमुखाश्चान्येऽपि[4] मान्या नृपाः ।
पूर्वप्राप्तविराटपार्षतमुखैर्भूपेन चात्यादृता-
स्तेऽपि स्वोचितवैभवानि भवनान्यापुश्चभूमिभृताः ॥ १४ ॥

ये भूपा बन्धमुक्ता मगधनृपगृहात् तेऽपि कृष्णाङ्घ्रिभक्ति-
स्फायानूत्थायिपार्थप्रणयपरवशाः स्वस्वराज्याप्तिहृष्टाः ।
भूषावेषैरपूर्वां तनुमिव दधतो वाहयन्तो धनौघा-
नापुः पादाग्रजाग्रन्निगळकिंकिणकणैस्तत्क्षणे[5] लक्ष्यभेदाः ॥ १५ ॥

सर्वे निर्वैरगर्वा विविधपरिकराखर्वमुर्वीशमुख्याः
सस्त्रीपुत्राः सुशस्त्रोज्ज्वलविपुलबला[6] दूतहूताः समेताः ।

---

१. 'तेव' ग. घ. २. 'तां प्राप्तो' ज.
३. 'सम्भावय' ख. ग. घ. ४. 'न्ये च मा' ग. घ.
५. 'ळकिणकिणैस्त' ट. ६. 'सुश' ख. घ.

धर्मात्मा धर्मजन्मा मदुपहृतधनेनैव तं यज्ञवर्यं
सर्वं निर्वोढुमीष्टामिति च विचकृषुः स्पर्धया वित्तभारान्* ॥

पाण्ड्यः पाटीरकूटान् मरिचपुरुचयान् केरळोऽवन्तिराजो
लक्षं योषाश्च भूषाः शुभितमणिमहःकन्दळाः कुन्तळेशः ।
काशीशोऽशीतिसाहस्रकमदित गवां कीकटे[1]शोऽश्वकोटिं
चीनेशः पट्ट[2]भेदान् गजरथतुरगान् भूरि सौवीरवीरः ॥ १७ ॥

काम्बोजः कम्बळौघान् मृगमदघनसारादिभाण्डानि पौण्ड्रो
वङ्गः पर्यङ्कवर्यान् नियुतमथ कलिङ्गो[3]ऽपि भृङ्गारसङ्घान् ।
सौराष्ट्रो भारलक्षं धवळगुळसिताः शैलजास्तैलकुम्भान्
कोटिं मारन्दकुम्भानयुतमपि घृतं कुम्भकोट्या च नन्दः ॥

हेतिव्रातान् शकौघैः सह स हि भगदत्तोऽहरन्माळवेन्द्रो
गोधूमद्रोणकोटिं सममगरुघटाजाततक्कोलभारैः ।
सर्वेऽपि स्वर्णरत्नान्युरुतरमहरन् द्वारतो वारिताश्च
प्रापुः कृच्छ्रात् प्रवेशं कथितनिजनिजप्राभृता भूभृतोऽमी ॥१९

[4]केऽपि स्फायद्धनार्याः कतिचिदतिरसप्राज्यसाज्यादिभोज्य-
स्वाराज्याशाः परे तु स्फुटयितुमनसो यज्ञविज्ञानदाक्ष्यम् ।

---

* एतदनन्तरं चपाठे 'हेतिव्रातान्०' (श्लो १९) ततः 'आयान्तु०' (श्लो ७७) इति परं दृश्यते ।

---

१. 'टेशश्च को' क. ज. ट. ढ. २. 'ट्टबन्धान्' क. ङ. छ. ट.
३. 'ङ्गोऽथ भृ' ज. ४. 'केचित् स्फा' ख. छ.
५. 'शाः' क. ख.

केचिद् गोविन्दसन्दर्शनविवशधियः केऽपि विद्वद्वितण्डा-
रक्ता विप्राः समीयु[1]र्विविधगुणकदम्बावलम्बाः कुटुम्बैः ॥ २० ॥

ततश्च दिदृक्षाबुभुक्षाधनजिघृक्षादिरसान्धहृदन्तचतुरन्तपर्यन्त-धरान्तरालमुहुर्मुहुरापतयालुसबालवृद्ध[2]सर्वचातुर्वर्ण्य[3]जनपरिपूर्णे नगरदेशे हविर्जिघृक्षाद्भुतदिदृक्षासमाक्षिप्तहृदयसर्वगीर्वाणगन्धर्वसिद्धचारणनाग-यक्षरक्षोगणनिरवकाशे चोपरिदेशे तद्विमर्दपरिहरणायेव गगनाङ्गणा-न्नगरभुवमवतीर्णेषु भूरिधामसु नारदादि[4]मुनिषु ततोऽपरमहर्षिषु च परमहर्षिषु सशिष्यनिवहेष्वप्यशिष्यमहिमसु[5] सदारकेष्वप्यंहसां विदार-केषु समागतेषु चतुर्दशभुवनगतजनधननिखिलपदार्थसार्थनिर्भरगर्भ-तया पद्मनाभकुक्षिरिव लक्ष्यते स्म यक्ष्यमाणस्य नृपते[6]र्नगरी ।

नेमुर्भूमिभृतो[8] नृपं भृतधना भूपोऽनमद् भूसुरान्
द्रष्टुं सम्मिळिता जनाः सम[7]नमन् भूपं द्विजान् भूपतीन् ।
प्राप्तान् प्राक्तननारदादिकमुनिस्तोमान् प्रणेमुः समं
भूपो भूमिभुजो द्विजाश्च जनतास्ते नेमुरेकं हरिम् ॥ २१ ॥

हन्तान[9]न्तं दिगन्तान्मिळितमुरुविधं[10] वीक्ष्य भूपालचक्रं
स्मृत्वान्तः पार्थवश्यं क्षितितलमखिलं कौरवः प्राप तापम् ।
एतावान् भूमिभारः स्थित इति मतवान् माधवो नारदोऽपि
त्वेतावत्सा[11]रशेषैः कुरुरणमनुसञ्चिन्त्य रोमाञ्चितोऽभूत् ॥ २२ ॥

---

१. ‘ युर्विपुलगु ’ ज. २. ‘ द्धचातु ’ ग. घ.
३. ‘ ण्यंपरि ’ क. ग. घ. ङ. ४. ‘ दादिषु मुनि ’ छ.
५. ‘ सु सदारेषु सदार ’ ख. ग. घ. छ. झ. ६. ‘ पस्य पुरी । ’ छ.
७. ‘ मगमन् ’ क. ८. ‘ भृतो ’ छ.
९ ‘ नन्ताद् दिग ’ छ. झ. ञ. ढ. १०. ‘ विधिं ’ ख. ग. घ. झ.
११. ‘ न्सावशे ’ क.

तत्र च निखिलमहीपतिमहीसुर[1]महाजन[2]मुनिसभाजनसभाजन-नियुक्तसमस्तकार्यभरसहसहदेवसमनुचोदितामात्यभृत्या[3]दिसर्वधूर्वहजन-पूर्वतरसम्भृतसम्भावनासम्भारसम्भरितेषु जम्भरिपुनिलयतुलितेषु भव-नेषु निजनिजभवनीयन्त एव निषीदन्तः प्रमोदन्ते स्म दशदिगन्त-समागन्तवो जन्तवः ।

तावदेव च प्रत्यासन्ने राजसूयारम्भोचिते फाल्गुनमासे सकल-यज्ञसम्भारमुख्यतमकल्पसमुत्पादनधृतप्रयत्नेषु मुनिप्रवरेषु स्वनिरूपित-प्रकृष्टतरोपतेष्ठीयमानभूयिष्ठतरेष्टकानिचयपट्टवसनपुष्टतरपशुकुलकृष्ण[4]-रुरुबलीवर्दशार्दूलाजिनमधुसर्पिःसोमवल्लीमतल्लीपरस्सहस्र[5]हेममाणिक्य-वार्क्षमार्त्तिकादिपात्रिकाविशेषपरिप्रीतहृदयेषु निरस्तदोषपुरस्तोयशुम्भ-दुदक्प्रवणप्रवरदेवयजनप्रदेशे प्र[6]थिष्ठकौशलं प्रतिष्ठापितं[7]प्रायासु[8] यज्ञ-शालासु समुचितसमये सानुजमित्रेण पार्थिवेन सार्धमासितः शासिता भुवनत्रयस्य वासुदेवः सकलमहाजनसमाजप्रथितप्रभायां सभायामेव-मभा[9]षिष्ट—

सर्वे भोः संशृणुध्वं ननु समु[10]पगता भूपतेर्यज्ञदीक्षा
श्वस्तु प्रारिप्सतेऽसौ तदुचितविभवामुत्सवाघोषलक्ष्मीम् ।
संप्राप्तानन्तजन्तुप्रकरसकलकामार्पणासाध्यवृत्तौ
तस्यां तु स्वस्वशक्त्या सहकृतिरखिलैर्गृह्यतां भूमिपालैः ॥२३॥

---

१. 'रमुनिसभाजननियु' ज. २ 'नमहामुनि' ख. ग. घ. ज.
३. 'त्यादिसधू' क. ख. ङ.
४. 'ष्णसाररुरु' छ. ५. 'रसह' क. ठ. ड.
६. 'प्रथितकौ' छ. ७. 'पितासु च यज्ञ' घ. झ.
८. 'सु च यज्ञ' ज. ९. 'भाणीत्–' ख. ग. घ. छ. झ.
१०. 'पनता' ङ.

मा च शङ्किषत मानवा मनाक्
प्रत्यवायमिह [1]यस्तितांसते ।
तस्य नेष्यति वपुः कबन्धतां
बन्धुरेष जगतः सुदर्शनः ॥ २४ ॥

इत्यभिहिते च विश्वजनसुश्लाघ्यभाग्यातिशयविराजमानमहाराजप्रमो[2]दपूरणैकपुमर्थसमर्थनसमुत्थायुकैर्विमुक्ताभिमानैः समस्तधरित्रीपतिभिः परितः परितोषसमनूदिते यादवेन्द्रवचने नृपतिरपि पृथ[3]क् पृथक् प्रधानकृत्येषु तत्तदुचितानुत्तमपटिम्नो जनानित्थमनुशशास—

सूदाध्यक्षोऽस्तु भीमः स [4]च चतुरमतिः सज्जतां सज्जनानां
शुश्रूषायां किरीटी नकुल इह च संसाधने साधनानाम् ।
पूजाकृत्ये यथार्हं [5]प्रसजतु सहदेवोऽपि वित्तौघगुप्तौ
यत्तो दुर्योधनः [6]स्याद् वहतु वितरणे निर्णयं कर्ण एव ॥२५॥

आस्तां व्यञ्जनपुञ्जसाधनसमादित्सुर्युयुत्सुः सदा
द्रौणिर्दानकृतौ रतोऽस्तु विदुरः प्रेक्षेत सूक्ष्मव्ययान् ।
भूपान् रञ्जय सञ्जयाचर मम प्रीत्यै सदा सात्यके
सर्वान् किं पृथगालपामि सकलैर्निर्वाह्यतामध्वरः ॥ २६ ॥

इत्यभिधाय तत्समयोचितमनो[7]नुकूलविभूषणादिपदार्थैर्विशेषतः कर्मोन्मुखानां सम्मान[8]कर्म निर्मायमेव निर्माय धर्मात्मजन्मनि निवृत्ते

१. ‘ यश्चिकांसते ’ क. च. ड. ढ
२. ‘ दप्रपू ’ ख. ग. घ. छ. ज. झ.
३. ‘ क् प्रधा ’ ग. घ. झ. ठ.
४. ‘ तु ’ ख. ग. छ. ज.
५. ‘ व्रजतु च सह ’ ग. घ.
६. ‘ स्यादिह तु ’ ज.
७. ‘ लदुकूलविभू ’ ग. घ. ज. झ, ‘ लमृदुदुकूलविभू ’ छ, ‘लभू’ ज. ढ.
८. ‘ कर्म निर्माय धर्मा ’ क.

